पटवच्च २-१-१२

यथा तन्तव एव व्यतिषङ्गविशेषभाजः पट इति नामरूपाभ्यां कार्यान्तरादिकं भजन्ते, तद्वद् ब्रह्मापि ॥ १६ ॥

यथा च प्राणादिः २-१-१०

यथा च वायुरेक एव शरीरे वृत्तिविशेषं भजमानः प्राणापानादिनामरूपकार्यान्तराणि भजते, तद्वद् ब्रह्मापीति तदनन्यत्वं जगतः सिद्धम् ॥ २० ॥

इति आरम्भणाधिकरणम् ॥ ३ ॥

---

(७) इतरव्यपदेशाधिकरणम्

इतरव्यपदेशात् हिताकरणादिदोषप्रसक्तिः २-१-११

ब्रह्मणो जगत्कारणत्वं सम्भवति, नेति संशयः। न सम्भवतीति पूर्वः पक्षः, "अयमात्मा ब्रह्म", "तत्त्वमसि" इति सामानाधिकरण्येन जीवो ब्रह्मेत्यवगमात्, जगत्सर्गस्य च जीवदुःखहेतुत्वात्, आत्महिताकरणादिदोषप्रसक्तेः सर्वज्ञस्य सत्यसङ्कल्पस्य ब्रह्मणो जगत्कारणत्वानुपपत्तेः। जीवपरयोर्भेदवादिन्यश्श्रुतयः, जगद्ब्रह्मणोरनन्यत्वं वदता त्वयैव परित्यक्ताः; भेदे सति अनन्यत्वासिध्देः।

औपाधिकभेदविषयाः भेदश्रुतयः, स्वाभाविकाभेदविषया अभेदश्रुतयः इति चेत्—तत्रेदं वक्तव्यम्, स्वभावतः स्वस्मादभिन्नं जीवं किम् उपहितं जगत्कारणं ब्रह्म जानाति, न वा। न जानाति चेत्—सर्वज्ञत्वहानिः। जानाति चेत्—स्वस्मादभिन्नस्य जीवस्य दुःखं स्वदुःखमिति जानतो ब्रह्मणः हिताकरणाहितकरणादिदोषप्रसक्तिरनिवार्या।

जीवब्रह्मणोरज्ञानकृतो भेदः, तद्विषया भेदश्रुतिरिति चेत्—तत्रापि जीवाज्ञानपक्षे पूर्वोक्तो दोषस्तत्फलं च तदवस्थमेव। ब्रह्माज्ञानपक्षे स्वप्रकाशस्वरूपस्य ब्रह्मणोऽज्ञानसाक्षित्वं तत्कृतजगत्सृष्टिश्च न सम्भवति। अज्ञानेन प्रकाशस्तिरोहितश्चेत्—तिरोधानस्य प्रकाशनिवृत्तिकरत्वेन प्रकाशस्यैव स्वरूपत्वात्स्वरूपनिवृत्तिरेवेति स्वरूपनाशादिदोषाः भाष्ये प्रपञ्चिताः। राद्धान्तस्तु-'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः' "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति", "प्रधानक्षेत्रज्ञपतिर्गुणेशः" "पृथगात्मानं प्रेरितारं च मत्वा" इत्यादिभिः प्रत्यगात्मनोऽर्थान्तरभूतं ब्रह्मेत्यवगमात्, जीवकर्मानुगुणतया जगत्सर्गस्य च ब्रह्मणो

लीलाप्रयोजनत्वात् जकत्कारणत्वं संभवत्येव। तत्त्वमस्यादिसामानाधिकरण्यनिर्देशः "यस्यात्मा शरीरम्" इत्यादिश्रुतेर्जीवस्य ब्रह्मशरीरत्वात्तच्छरीरतया जीवप्रकारब्रह्मप्रतिपादनपरः। सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणावस्थम्, स्थूलचिदचिद्वस्तुशरीरं ब्रह्मैव कार्यावस्थमिति कार्यकारणयोरनन्यत्वम्। एवमपि शरीरभूतयोश्चिदचिद्वस्तुनोः शरीरिणो ब्रह्मणश्च दुःखित्वपरिणामित्वहेयप्रत्यनीकत्वकल्याणगुणाकरत्वस्वभावाः स्वरूपविवेकविषयश्रुतिसिद्धाः तथैव व्यवस्थिता इति ब्रह्मणो जगत्कारणत्वं संभवत्येव। सूत्रार्थस्तु—इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः—ब्रह्मण इतरः जीवः: ब्रह्मणो जीवतया व्यपदेशात् जीवस्य च दुःखित्वात्, हितरूपं जगदकरणमहितरूपजगत्करणमित्यादिदोषप्रसक्तिर्ब्रह्मणः। अतो ब्रह्मणो जगत्कारणत्वं न संभवति—इति ॥ २१ ॥

अत उत्तरं पठति—

अधिकं तु भेदनिर्देशात् २-१-२२

तुशब्दः पक्षव्यावृत्त्यर्थः। प्रत्यगात्मनः अधिकम्—अर्थान्तरभूतं ब्रह्म। कुतः? भेदनिर्देशात्—"स कारणं करणाधिपाधिपः", "प्रधानक्षेत्रज्ञपतिर्गुणेशः" "पृथगात्मानं प्रेरितारं च मत्वा" इत्यादिभ्यः प्रत्यगात्मनो जीवाद् ब्रह्मणो हि भेदो निर्दिश्यते ॥ २२ ॥

अश्मादिवच्च तदनुपपत्तिः २-१-२३

अश्मकाष्ठलोष्टतृणादेरचेतनस्येवानन्तदुःखाकरजीवस्य निरतिशयानन्दसत्यसङ्कल्पब्रह्मभावानुपपत्तिश्च। न केवलं भेदश्रुत्याऽर्थान्तरत्वमवगम्यते, वस्त्वनुपपत्त्या चेत्यर्थः। जीवसामानाधिकरण्यनिर्देशः, "यस्यात्मा शरीरम्" इत्यादिश्रुतिशतसिद्धजीवप्रकारकब्रह्मप्रतिपादनपर इति अवस्थितेरिति काशकृत्स्नः" इत्यत्रैव प्रतिपादितः ॥ २३ ॥

इति इतरव्यपदेशाधिकरणम् (7)

—:*:—

(८) उपसंहारदर्शनाधिकरणम्

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि २-१-२४

ब्रह्मणो जगत्कारणत्वं संभवति न वेति संशयः। न संभवतीति पूर्वः पक्षः, लोके कार्यजननसमर्थस्यापि वस्तुनः तत्तत्कार्यजनने अनेककारकोपसंहारदर्शनात् विचित्रजगज्जन्मसमर्थस्यापि ब्रह्मणोऽसहायस्य जनयितृत्वानुपपत्तेः। राद्धान्तस्तु—क्षीरस्य दधिभावे अनन्यापेक्षत्वदर्शनात् अनेककारकोपसंहारनियमो न दृश्यत इति ब्रह्मणोऽनन्यापेक्षस्यैव कारणत्वं संभवत्येव। सूत्रमपि व्याख्यातम्। 'क्षीरवद्धि' इति प्रसिद्धवन्निर्देशः चोद्यमान्द्यपरः ॥ २४ ॥

## देवादिवदपि लोके २-१-२५

यथा देवादयः स्वेस्वे लोके स्वापेक्षितानि स्वसङ्कल्पादेव सृजन्ति; तथा ब्रह्मापि। देवादेः शास्त्रावसेयशक्तितया ब्रह्मतुल्यत्वेऽपि देवादिग्रहणं ब्रह्मणो विचित्रशक्तित्वस्य सुग्रहणायेति मन्तव्यम् ॥ २५ ॥

इति उपसंहारदर्शनाधिकरणम् ॥ ८ ॥

(९) कृत्स्नप्रसक्त्यधिकरणम्

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा २-१-२६

ब्रह्मणो जगत्कारणत्वं संभवति, नेति संशयः। न संभवतीति पूर्वः पक्षः, निरवयवस्य ब्रह्मणो जगदुपादानत्वे कृत्स्नस्य ब्रह्मणो जगदाकारेणोपयोगप्रसङ्गात्; तत्परिजिहीर्षया सावयवत्वाभ्युपगमे "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यादिः कारणावस्थायां निरवयवत्ववाचिशब्दो बाध्येत। यद्यपि सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणम्, स्थूलचिदचिद्वस्तुशरीरं ब्रह्म कार्यमित्यभ्युपगम्यते, तथापि शरीरांशस्यापि कार्यत्वाभ्युपगमात् कृत्स्नप्रसक्तिर्निरवयवत्वशब्दबाधो वा।

राद्धान्तस्तु—सकलेतरविसजातीयं श्रुत्येकसमधिगम्यं सर्वशक्तियुक्तं ब्रह्म निरवयवमपि कार्यञ्च भवति, अन्यच्च भवतीति परिमितशक्तिवस्तुचोद्यं न तत्र प्रसज्यते। यथा जातिवादिनो जातिरेकैवामूर्ता खण्डमुण्डादिष्व-

त्यन्तविलक्षणेषु अनन्तेष्वपि परिसमाप्यैव वर्तते; न तत्रेतरवस्तुचोद्यमिति। अतो ब्रह्मणो जगत्कारणत्वं संभवत्येव। सूत्रार्थस्तु—कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा। ब्रह्मकारणत्वे कृत्स्नस्य ब्रह्मणः कार्यत्वेनोपयोगप्रसङ्गः, निरवयवत्वात्; सावयवत्वे निरवयवत्वशब्दकोपो वा—निरवयवत्ववादिशब्दबाधप्रसङ्ग इत्यर्थः॥

श्रुतेस्तु शब्दमूलत्वात् २-१-२७

तुशब्दः पक्षव्यावृत्त्यर्थः। श्रुतेः—श्रुतिप्रामाण्यात् नैवं प्रसज्यते; शब्दमूलत्वात्—शब्दैकमूलत्वेन सकलेतरविजातीयत्वादित्यर्थः॥ २७॥

आत्मनि चैवं विचित्राश्च हि २-१-२८

आत्मनि चैवम्—जीवात्मनि चेतनधर्माप्रसक्तिश्चैवम् = अचेतनविसजातीयत्वादेवेत्यर्थः। विचित्राश्च हि—अचेतनेषु च विसजातीयेष्वग्निजलादिषु विचित्रा हि शक्तयो दृश्यन्ते; एवं परमात्मनः चेतनाचेतनविसजातीयस्य विचित्राः शक्तय उपपद्यन्ते॥ २८॥

स्वपक्षदोषाच्च २-१-२९

प्रधानादिकारणपक्षे दोषाच्च ब्रह्मैव जगत्कारणम्। तत्र हि लौकिकवस्तुसजातीयत्वेन प्रधानादेरुक्तदोषोऽन्ये च प्रसज्येरन्।

सर्वोपेता च तद्दर्शनात् २-१-३०

न केवलं सकलेतरविसजातीयत्वेन सर्वशक्त्युपेता परा देवतेत्युच्यते; तद्दर्शनाच्च—सर्वशक्तियोगश्रुतेरित्यर्थः। दर्शयतीति दर्शनं = श्रुतिः। दर्शयति च श्रुतिः सर्वशक्तियोगम्, "पराऽस्य शक्तिर्विविधैव श्रूयते" इत्यादिका॥ ३०॥

उक्तस्यार्थस्य द्रढिम्ने चोद्यपूर्वकं पूर्वोक्तं स्मारयति—

विकरणत्वान्नेति चेत्—तदुक्तम् २-१-३१

विकरणत्वात्—करणविरहितत्वाद्ब्रह्म न कारणम्; "न तस्य कार्यं करणं च विद्यते" इति हि श्रूयते इति चेत्; तदुक्तम्—अत्र यद्वक्तव्यम्, तत् पूर्वमेवोक्तम्। "शब्दमूलत्वात्", "विचित्राश्च हि" इत्ययमेव

परिहारः। शब्दैकमूलत्वेन सकलेतरविसजातीयत्वाद् ब्रह्मणः, विसजातीयानां च शक्तिवैचित्र्यस्य लोकदृष्टत्वात् सर्वमुपपन्नमित्यर्थः ॥ ३१ ॥
इति कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥

— :0: —

(१०) प्रयोजनवत्त्वाधिकरणम्

न प्रयोजनवत्त्वात् २-१-३२

ब्रह्मणो जगत्कारणत्वं संभवति, नेति संशयः। न संभवतीति पूर्वः पक्षः; बुद्धिपूर्वारम्भाणां सप्रयोजनत्वात् ईश्वरस्य च स्वत एवावाप्तसमस्तकामस्य जगत्सृष्ट्यारम्भे प्रयोजनाभावात्। गर्भवासादिदुःखरूपत्वात् सृष्टेः परानुग्रहेऽपि न सप्रयोजनत्वमिति। राद्धान्तस्तु--केवललीलाप्रयोजनाय जगत्सृष्ट्याद्यारम्भः संभवति; यथा लोके सप्तद्वीपवर्तीं मेदिनीमधितिष्ठतो महाराजस्य परिपूर्णस्यापि केवललीलैकरसाः कन्दुकाद्यारम्भा दृश्यन्ते, तद्वदीश्वरस्यापि प्रयोजनाय जगत्सृष्ट्यारम्भः संभवति। सूत्रार्थस्तु—न प्रयोजनवत्त्वात्। प्रयोजनवत्त्वात् सृष्टेः ईश्वरस्य स्वतः परिपूर्णस्य प्रयोजनाभावान्न स्रष्टृत्वम् ॥ ३२ ॥

लोकवत्तु लीलाकैवल्यम् २-१-३३

लीलाकैवल्यं लीलायाः प्रयोजनत्वे कैवल्यं संभवति; केवलायाः लीलायाः सृष्ट्यारम्भप्रयोजनत्वं संभवतीत्यर्थः। लोकवत्। यथा लोके राज्ञः कन्दुकाद्यारम्भः ॥ ३३ ॥

ननु ईश्वरस्य लीलैकप्रयोजना जगत्सृष्टिर्न संभवति। देवमनुष्यादिविषमसृष्ट्या पक्षपातप्रसङ्गात्। दुर्विषहदुःखगर्भत्वेन नैर्घृण्यप्रसङ्गाच्च परमकारुणिकस्य परमपुरुषस्य परिपूर्णस्य लीलार्थमपि जगत्सर्गो न संभवतीत्याशङ्क्याह—

वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति ॥ ३४ ॥

ईश्वरस्य विचित्रजगत्सृष्टौ देवादिवैषम्यप्रयुक्तपक्षपातः, दुःखप्रदजगत्सर्गे नैर्घृण्यं च न संभवतः; वैषम्यादावीश्वरस्य क्षेत्रज्ञकर्मसापेक्षत्वात्। क्षेत्रज्ञानां पूर्वपूर्वकर्म पर्यालोच्य तत्तत्कर्मानुगुणं विषमं जगत् सृजतीति तत्कर्मैव वैषम्यादिहेतुरित्यर्थः।

तथा देवादिदेहयोगं क्षेत्रज्ञानां तत्तत्कर्मसापेक्षं दर्शयति हि श्रुतिः, "साधुकारी साधुर्भवति पापकारी पापो भवति" इति ॥ ३४ ॥

न कर्माविभागादिति चेत्--न--अनादित्वादुपपद्यते

चाप्युपलभ्यते च २-१-३५

सृष्टेः प्राक् कर्म न विद्यते क्षेत्रज्ञाभावात्; तदभावश्च, "सदेव सोम्येदम्" इत्यवधारणावगतादविभागादिति चेत्—तन्न, अनादित्वात् क्षेत्रज्ञानां तत्तत्कर्मप्रवाहाणां च। उपपद्यते च क्षेत्रज्ञस्वरूपानादित्वेऽपि नामरूपविभागाभावादविभागश्रुतिः। अन्यथा अकृताभ्यागमकृतविप्रणाशप्रसङ्गात्। "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत" इति नामरूपव्याकरणमात्रश्रवणात् क्षेत्रज्ञानां स्वरूपानादित्वं सिद्धम्। उपलभ्यते च श्रुतिस्मृत्योः क्षेत्रज्ञानामनादित्वम्, "ज्ञाज्ञौ द्वावजावीशानीशौ", "नित्यो नित्यानाम्", "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि", "न जायते" इति। अविभागश्रुतिरपि नामरूपविभागाभावादेवोपपद्यत इत्यभिप्रायः।

सर्वधर्मोपपत्तेश्च २-१-३६

प्रधानपरमाण्वादिष्वनुपपन्नानाम्, "स्वपक्षदोषात्" इत्यादिषूक्तानां सर्वेषां धर्माणां कारणत्वोपपादकानां ब्रह्मण्युपपत्तेश्च ब्रह्मैव कारणम्। प्रधानपरमाण्वादीनां परिमितशक्तिकत्वाल्लोकदृष्टवस्तुसजातीयत्वाच्च अनुपपत्तयः सहस्रशः सन्ति। ब्रह्मकारणत्वे शास्त्रैकसमधिगम्यतया (म्यस्य) ब्रह्मणः सकलेतरविसजातीयत्वेनाचिन्त्यशक्तित्वात् सर्वशक्तित्वश्रुतेश्च सर्वमुपपन्नमित्यर्थः ॥ ३६ ॥

इति प्रयोजनवत्त्वाधिकरणम् ॥ १० ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे

द्वितीयस्याध्यायस्य प्रथमः पादः ॥ १ ॥

## अथ द्वितीयस्याध्यायस्य द्वितीयः पादः

### (१) रचनानुपपत्त्यधिकरणम्

### रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च २-२-१

सांख्यतन्त्रसिद्धः प्रधानकारणवादः किं समीचीनयुक्तिमूलः, उत नेति संशयः; समीचीनयुक्तिमूल इति पूर्वः पक्षः; घटादिवद्विचित्रसन्निवेशं जगत् कार्यम्, तद्वदेव स्वसरूपकारणविशेषारब्धम्; सुखदुःखमोहाद्यात्मकतया सत्त्वाद्यात्मकं जगत् सत्त्वरजस्तमोमूलकम्। तत्र महदादिपृथिव्यन्तानां घटादिवत् परिणामित्वेन कारणापेक्षित्वाविशेषात् ते जगदुत्पत्तौ कारणकाष्ठा न भवन्ति, तेषां परिमितत्वेन अपरिमितजगदुत्पादनाशक्तेः। अन्यूनानतिरिक्तानि साम्यावस्थानि अपरिमितानि सत्त्वरजस्तमांसि अव्यक्तप्रधानादिशब्दाभिधेयानि जगत्कारणम्।

राद्धान्तस्तु—रथप्रासादादिहेतुभूतदार्वादिवत् अचेतनं प्रधानं स्वस्वभावाद्यभिज्ञचेतनानधिष्ठितं विचित्रजगद्रचनासमर्थमिति न केवलं प्रधानं कारणम्। सूत्रार्थस्तु—रचनानुपपत्तेश्च नानुमानम्—अनुमीयत इति अनुमानम् प्रधानम्; तस्याचेतनस्य प्राज्ञानधिष्ठितस्य विचित्रसन्निवेशजगद्रचनानुपपत्तेः तन्न कारणम्। चकारात् सत्त्वादीनां द्रव्यगुणत्वेन शौक्ल्यादेरिवोपादानकारणत्वासम्भवं समुच्चिनोति। सत्त्वादयो हि कार्यगतलाघवप्रकाशादिहेतुभूताः कारणभूतपृथिव्यादिगताः तत्स्वभावविशेषाः। 'प्रवृत्तेश्च'। अनुपपत्तेरिति वर्तते; प्राज्ञानधिष्ठितस्य प्रधानस्य विचित्रजगद्रचनानुगुण—आद्यपरिस्पन्दरूपप्रवृत्त्यनुपपत्तेश्च न प्रधानं कारणम् ॥ १ ॥

### पयोम्बुवच्चेत्---तत्रापि २-२-२

पयसः अम्बुनश्च यथा प्राज्ञानधिष्ठितस्यैव दधिभावेन नारिकेलचूतादिविचित्ररसरूपेण च परिणामो दृश्यते; तद्वत् प्रधानस्यापि केवलस्यैव जगदाकारेण परिणाम उपपद्यत इति चेत्—परिहरति तत्रापीति। पक्षीकृतमित्यर्थः। यत्र रथादिष्वचेतनस्य प्राज्ञाधिष्ठितत्वं दृष्टम्, तद्व्यतिरिक्तं हि सर्वं पक्षीकृतमेव। "योऽप्सु तिष्ठन्" इत्यादिश्रुतेः तदपि प्राज्ञाधिष्ठितम् ॥ २ ॥

### व्यतिरेकानवस्थितेश्चानपेक्षत्वात् २-२-३

सर्गव्यतिरेकेण = प्रतिसर्गावस्थया अनवस्थितिप्रसङ्गाच्च केवलं प्रधानं न कारणम्; अन्यानपेक्षत्वात् प्रधानस्य सर्वदैव हि सृष्टिः प्रसज्यते ॥ ३ ॥

### अन्यत्राभावाच्च न तृणादिवत् २-२-४

धेन्वादिनोपयुक्तं हि तृणोदकादि स्वयमेव क्षीराकारेण परिणमते ; तद्वत् प्रधानमपीति च वक्तुं न शक्यते ; धेन्वादिनोपयुक्तस्यापि तृणादेः क्षीराकारेण परिणामः प्राज्ञाधिष्ठितत्वादेव भवतीत्यभ्युपेतव्यम् ; कुतः ? अन्यत्राभावात्=अनडुदाद्युपयुक्तस्य प्रहीणस्य वा तृणादेः क्षीराकारेण परिणामाभावात् ॥ ४ ॥

### पुरुषाश्मवदिति चेत्--तथापि २-२-५

प्राज्ञानधिष्ठितमपि प्रधानं चैतन्यमात्रवपुर्निष्क्रियः पुरुषः स्वसन्निधिमात्रेण सर्गादौ प्रवर्तयति। यथा दृक्छक्तियुः कगमनशक्तिविकलः पङ्गुः पुरुषः अन्धं दृक्छक्तिविकलं प्रवृत्तिशक्तियुक्तं पुरुषं स्वसन्निधानात् प्रवर्तयति ; यथा चायस्कान्ताश्मा स्वसन्निधानात् अयः प्रवर्तयति ; तद्वदिति चेत्—परिहरति तथापीति। तद्वदपि प्रधानस्य प्रवृत्तिर्नोपपद्यते। तत्र हि पङ्गोः पुरुषस्य गमनशक्तिविकलस्यापि मार्गोपदेशादिव्यापारः कादाचित्को दृश्यते। अन्धस्य चाक्षुषव्यापारविरहेऽपि पङ्गूपदेशग्रहणादिः चेतनधर्मोऽस्ति। अयस्कान्तमणेरपि अयःप्रवृत्तौ कादाचित्कमयस्सन्निधानं विद्यते। इह तु सन्निधिमात्रातिरेकी तादृशः कश्चिद्विशेषः उभयत्रापि न विद्यते। पुरुषसन्निधानस्य नित्यत्वेन नित्यसर्गप्रसक्तिः ; तथा सति प्रतिसर्गाभावोऽपवर्गाभावप्रसङ्गश्च ॥ ५ ॥

इतश्च—

### अङ्गित्वानुपपत्तेश्च २-२-६

गुणानामुत्कर्षापकर्षरूपाङ्गाङ्गिभावेन जगत्प्रवृत्तिः प्रतिसर्गावस्थायां साम्यावस्थानामेकस्योत्कर्षरूपाङ्गित्वानुपपत्तेश्च न सम्भवति। तत्राप्युत्कर्षोऽस्ति चेत्--सर्वदा सर्गप्रसङ्गः ॥ ६ ॥

### अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् २-२-७

उक्तप्रकारात् व्यतिरिक्तप्रकारेण प्रधानानुमितौ च, प्रधानस्य ज्ञातृत्वशक्तिवियोगात् रचनानुपपत्त्यादयो दोषाः तदवस्थाः ॥ ७ ॥

## अभ्युपगमेऽप्यर्थाभावात् २-२-८

प्रधानाभ्युपगमेऽपि प्रधानेन प्रयोजनाभावान्न तत् अनुमेयम्। पुरुषस्य भोगापवर्गार्थतया हि प्रधानप्रवृत्तेः सप्रयोजनत्वम्। चैतन्यमात्रवपुषो निष्क्रियस्य नित्यनिर्विकारस्य पुरुषस्य इतरेतराध्यासकृतप्रकृतिदर्शनरूपभोगः, तद्विवेकरूपापवर्गश्च न संभवति। निर्विकारस्यैव प्रकृतिसन्निधानेन भोगः सम्भवति चेत्—उभयोर्नित्यत्वेन सर्वगतत्वेन च सन्निधानस्य नित्यत्वादपवर्गासिद्धिः; तथाविधसन्निधेरेवापवर्गहेतुत्वे भोगासिद्धिश्च ॥ ८ ॥

## विप्रतिषेधाच्चासमञ्जसम् २-२-९

विप्रतिषिद्धं चेदं साङ्ख्यदर्शनम्। प्रकृतेः परार्थतया पुरुषो द्रष्टा भोक्ता अधिष्ठाता चेत्याहुः; प्रकृतेश्च पुरुषस्य भोगापवर्गार्थतया सप्रयोजनत्वं च प्रकृत्यैव साधनभूतया पुरुषो भोगमपवर्गं चाश्नुत इति चोक्तेः। स च पुरुषश्चैतन्यमात्रवपुर्नित्यो निर्विकारो न द्रष्टा न भोक्ता न कर्ता इति च वदन्ति। प्रकृतिरचेतनभूतैव पुरुषसन्निधानात् पुरुषधर्मं चैतन्यं स्वस्मिन्, स्वधर्मं कर्तृत्वं पुरुषे चानुसन्धाय बध्यते; मोक्षसाधनमनुतिष्ठति मुच्यते इति चाहुः। अध्यासरूपमनुसंधानं हि चेतनधर्मः; तथा प्रकृतिरनुपकारिणः पुरुषस्य भोगापवर्गस्वरूपं प्रयोजनं साधयतीत्युपकारिणी इति चाहुः। अध्यासरूपबन्धादयः पुरुषस्य न सन्तीति चेत्, कस्तस्योपकारः। एवमाद्यन्योन्यविरुद्धभाषणादसमञ्जसम् ॥ ९ ॥

इति रचनानुपपत्त्यधिकरणम् ॥ १ ॥

## (२) महद्दीर्घाधिकरणम्

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् २-२-१०

किं काणादाभ्युपगतः परमाणुकारणवादः समीचीनयुक्तिमूलः, उत नेति संशयः। समीचीनयुक्तिमूल इति पूर्वपक्षः, अवयवसंयोगात् अवयव्युत्पत्तेर्दर्शनात् अवयवाल्पत्वप्राचुर्याभ्यां सर्षपमहीधरवैषम्यदर्शनाच्च अवयवाल्पत्वकाष्ठा अवश्याभ्युपगमनीयेति परमाणुसिद्धिः। ते चतुर्विधाः परमाणवो विपाकदशापन्नक्षेत्रज्ञादृष्टसचिवाः परमेश्वराधिष्ठिताः द्व्यणुकादिक्रमेण जगदारम्भका इति। राद्धान्तस्तु—अवयवाः स्वकीयैः षड्भिः पार्श्वैः संयुज्यमानाः स्वस्मान्महान्तमवयविनमुत्पादयन्तीति परमाणुष्वपि तथैवोत्पादकत्वमभ्युपेतव्यम्। तथा सति परमाणवोऽपि सांशाः स्वकी-

यैरवयवैः, ते च स्वकीयैरिति न क्वचित् कारणस्य व्यवस्थितिः। सूत्रार्थस्तु—महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्—असमञ्जसमिति वर्तते। वाशब्दश्चार्थे। ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्याम् महद्दीर्घवत्—त्र्यणुकद्व्यणुकोत्पत्तिवत् अन्यच्च तदभ्युपगतं सर्वमसमञ्जसम् ॥ १० ॥

द्व्यणुकादिक्रमेणारम्भकत्वं कारणानवस्थितेरसमञ्जसम्। किमत्रान्यदसमञ्जसमित्यत्राह—

उभयथापि न कर्मातस्तदभावः २-२-११

परमाणूनामाद्यं कर्म अदृष्टकारितमित्यभ्युपगम्यते, तददृष्टं किमणुगतम्, उत क्षेत्रज्ञगतम्। उभयथाऽप्यदृष्टस्य अकादाचित्कत्वेन सदोत्पादकत्वप्रसङ्गात् कादाचित्कं कर्म न संभवति। अतः कर्मणा परमाणुसंयोगाभावः। विपाकापेक्षत्वेऽपि नानाविधानन्तादृष्टानामेकदैव एकरूपविपाकश्च न संभवति। आनुमानिकेश्वरासिद्धेरीश्वरेच्छयापि नियमो न संभवति ॥ ११ ॥

समवायाभ्युपगमाच्च साम्यादनवस्थितेः २-२-१२

समवायाभ्युपगमाच्च असमञ्जसम्;। समवायो हि जातिगुणादीनां द्रव्यविशेषापृथक्सिद्धिहेतुतयाऽभ्युपगम्यते; समवायस्यापि तथाभावे हेत्वपेक्षासाम्यादनवस्थितेः। समवायस्य तथाभावः स्वाभाविक इति चेत्—जातिगुणादीनामेवैष स्वभाव इति युक्तम् ॥ १२ ॥

नित्यमेव च भावात् २-२-१३

समवायसम्बन्धस्य नित्यत्वाभ्युपगमात्, सम्बन्धिनित्यत्वमन्तरेण तदनुपपत्तेः, अवयवावयविनोरुभयोरपि नित्यमेव भवात् कार्यकारणभावएव सिद्ध्यति ॥ १३ ॥

रूपादिमत्त्वाच्च विपर्ययो दर्शनात् २-२-१४

परमाणूनां नित्यत्वनिरवयवत्वादिविपर्ययश्च स्यात्, रूपादिमत्त्वात् तेषाम्। घटादिषु रूपादिमत्सु तथा दर्शनात्। दर्शनादेव हि त्वदभिमतं परिकल्प्यते ॥ १४ ॥

## उभयथा च दोषात् २-२-१५

अनित्यत्वादिभयात् परमाणूनां रूपादिशून्यत्वे कार्यगुणस्य कारण-गुणपूर्वकत्वासिद्धिः; तत्सिद्धये रूपादिमत्त्वे चानित्यत्वादिदोषप्रसक्तिरिति उभयथा च दोषादसमञ्जसमेव ॥ १५ ॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा २-२-१६

कापिलपक्षे हि श्रुतिन्यायविरुद्धेऽपि सत्कार्यवादादि किञ्चित् वैदिकैः परिगृह्यते; काणादे तु कस्यचिदप्यंशस्य वैदिकैः परिग्रहाभावादनुपपन्नत्वाच्च निःश्रेयसार्थिभिरत्यन्तमनपेक्षा कार्या ॥ १६ ॥

इति महद्दीर्घाधिकरणम् ॥ २ ॥

## (३) समुदायाधिकरणम् ।

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः २-२-१७

सौगताश्चतुर्विधाः--प्रत्यक्षसिद्धस्थूलद्रव्यवादिनः केचिद्वैभाषिकाः; अन्ये विज्ञानानुमेयस्थूलद्रव्यवादिनः, ते च सौत्रान्तिकाः। अपरे निरालम्बनविज्ञानमात्रसद्भावं वदन्ति योगाचाराः। त्रयोऽप्येते स्वाभ्युपगतवस्तुनः क्षणिकत्वं वदन्ति। अन्ये तु सर्वशून्यवादिनो माध्यमिकाः। तत्राद्ययोर्बाह्यसद्भावमभ्युपगच्छतोः जगदुत्पत्तिप्रकारः लोकव्यवहारश्च सूपपादः, उत दुरुपपाद इति संशयः। सूपपाद इति पूर्वः पक्षः; तथाहि—पार्थिवाप्यतैजसवायवीया गन्धादियुक्ताः परमाणवो हि पृथिव्यादिरूपेण संहता भवन्ति; भूतेभ्यश्च शरीरेन्द्रियविषयलक्षणसङ्घाताः। तत्र आन्तरः विज्ञानसन्तानो ग्राहकाभिमानारूढः आत्मत्वेनावतिष्ठते। एषु क्षणिकेष्वपि स्थिरत्वादिगोचरबुद्ध्याख्याविद्यया सर्वमुपपद्यत इति जगदुत्पत्तिर्लोकव्यवहारश्च युज्यते।

राद्धान्तस्तु—क्षणध्वंसिनः परमाणवः कदा संहतौ व्याप्रियन्ते, कदा संहन्यन्ते, संहतौ व्यापृताः तस्मिन्नेव क्षणे विनष्टाश्चेत्—के पुनः संहन्यन्ते? कश्च विज्ञानात्मा कदा कं विषयं स्पृशति? कश्च कदा कं जानाति? कश्च कदा कमर्थमुपादत्ते? स्प्रष्टा नष्टः; स्पृष्टं च नष्टम्; वेदिता

नष्टः; वेद्यं च नष्टम्। कथमन्येन स्पृष्टमन्यो विजानाति? कथं वाऽन्येन विदितमन्य उपादत्ते? सन्तानैकत्वे सिद्धेऽपि सन्तानिभ्यः सन्तानस्य परमार्थतो वस्त्वन्तरत्वानभ्युपगमात् सन्तानैक्यमपारमार्थिकमकिञ्चित्करम्। स्थिरत्वाद्यविद्ययापि सङ्घातोत्पत्तिर्न संभवति; न हि शुक्तिकादिषु रजताविद्यया रजताद्युत्पत्तिसम्भवः। विदुषश्च पूर्वस्य नष्टत्वेन उत्तरेणाविदुषाऽनुसंहितार्थोपादानं न सम्भवति। संस्काराश्रयत्वेन चैकोऽर्थः स्थिरो नाभ्युपगम्यते। अतो जगदुत्पत्तिर्लोकव्यवहारश्च दुरुपपाद एव।

सूत्रार्थस्तु—समुदाय उभयहेतुकेऽपि तदप्राप्तिः—उभयहेतुकेऽपि समुदाये समुदायत्वाप्राप्तिः; परमाणुहेतुकः पृथिव्यादिहेतुकः (पृथिव्यादिः समुदायः, पृथिव्यादिहेतुकः?) शरीरेन्द्रियसमुदायः—इत्युभयहेतुकोऽपि समुदायः क्षणिकत्वाभ्युपगमादुक्तेन न्यायेन न सिद्ध्यतीत्यर्थः ॥ १७ ॥

इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात् २-२-१८

यद्यपि क्षणिकाः सर्वे भावाः, तथाप्यविद्यादीनामितरेतरहेतुकत्वादुपपन्नं लोकव्यवहारादिकम्; अस्थिरेषु स्थिरत्वबुद्धिरूपया अविद्यया तत्रतत्र रागद्वेषादयो जायन्ते इत्येवमादिपरम्परया पुनरप्यविद्येति चक्रवत् परिवर्तत इति चेत्—नैतदुपपद्यते, सङ्घातभावानिमित्तत्वादविद्यायाः। यद्यप्यविद्याख्या विपरीतबुद्धिः क्षणिकं स्थिरत्वेन विषयीकरोति, तथापि तन्न वस्तुतः स्थिरं भवतीति वस्तुतः स्थिरकार्यं न करोति। अतः सङ्घातभावो न सिध्यतीत्यर्थः। अस्थिरे स्थिरत्वबुद्धियुक्तस्य विज्ञानात्मनस्तदैव नष्टत्वात् कस्य रागद्वेषादयो जायन्त इति रागद्वेषादिपरम्परा च न सिध्यतीत्यभिप्रायः ॥ १८ ॥

इतश्च—

उत्तरोत्पादे च पूर्वनिरोधात् २-२-१९

उत्तरघटक्षणोत्पत्तिवेलायां पूर्वस्य विनष्टत्वादभावस्यैव हेतुत्वेनाविशेषात् सर्वेषां सर्वदोत्पत्तिः प्रसज्येत। पूर्वक्षणवर्तिनो हेतुत्वोपगमेऽपि देशादेर्विशेषकस्य स्थिरस्यैकस्यानभ्युपगमादविशेषेणोत्तरक्षणवर्तिनः सर्वस्य हेतुः स्यात् ॥ १९ ॥

असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा २-२-२०

असत उत्पत्तौ प्रतिज्ञाविरोधश्च भवताम् । अधिपतिसहकार्यादीनां विज्ञानोत्पत्तिहेतुत्वप्रतिज्ञानात । अथैतत्परिजिहीर्षया पूर्वो घटक्षणस्तिष्ठतीत्युच्येत, तदा युगपत् घटक्षणद्वयोपलब्धिप्रसङ्गः; न चोपलभ्यते। उपरोधो विरोधः ॥ २० ॥

सतो निरन्वयविनाशोऽपि न सम्भवतीत्याह—

प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् २-२-२१

प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिः स्थूलसूक्ष्मविनाशयोरप्राप्तिरित्यर्थः। स्थूलविनाशः मुद्गराभिघाताद्यनन्तरभावी उपलब्धियोग्यः; सूक्ष्मस्तु, प्रतिक्षणभावी उपलब्ध्यनर्हः। तौ निरन्वयौ न भवतः; उत्पत्तिविनाशधर्मभागिनो द्रव्यस्याविच्छेदात्; "तदनन्यत्वम्" इति सत्कार्यवादस्योपपादितत्वादित्यभिप्रायः। घटादौ कपालादिरूपावस्थया निरन्वयविनाशादर्शनात् । प्रदीपनिर्वाणेऽपि सूक्ष्मावस्थाप्राप्तिरित्यविरोधः ॥ २१ ॥

उभयथा च दोषात् २-२-२२

उत्पन्नस्य तुच्छतापत्तौ, तुच्छादुत्पत्तौ च इत्युभयप्रकारे च दोषापत्तेः ते न सम्भवतः। उत्पन्नस्य तुच्छतापत्तौ हि पश्चात् तुच्छादुत्पद्यमानं जगत् तुच्छात्मकमेव स्यात्; मृत्सुवर्णादेरुत्पद्यमानमृत्सुवर्णाद्यात्मकघटमुकुटादिवत् । अतस्तुच्छादुत्पत्तिः तुच्छतापत्तिश्च न संभवतः ॥ २२ ॥

आकाशे चाविशेषात् २-२-२३

आकाशे तुच्छस्वरूपता न संभवति, अबाधितप्रतीतिसिद्धपृथिव्यादिवत् आकाशेऽप्यबाधितप्रतीतेरविशेषात्। प्रतीयते ह्याकाशः, 'अत्र श्येनः पतति; अत्र गृध्रः' इति श्येनादेः पतनदेशत्वेन ॥ २३ ॥

अनुस्मृतेश्च २-२-२४

प्रत्यभिज्ञानाच्च न घटादेः क्षणिकत्वम् । "तदेव इदम्" इति हि प्रत्यभिज्ञायते (प्रत्यभिज्ञा जायते?) । प्रत्यभिज्ञानं हि नाम, अतीतवर्तमानकालवर्त्येकवस्तुविषयमेकं प्रत्यक्षज्ञानम् । तस्य कालद्वयसम्बन्धविशिष्ट-

मेव वस्तु विषयः। न च तदित्यंशः स्मरणम्, इदमित्यंशश्च ग्रहणम्, अतीतकालसम्बन्धिनि इन्द्रियसम्प्रयोगाभावादिति वाच्यम्, तदिदमिति सामानाधिकरण्येन ग्रहणस्यैकत्वस्फुरणात्। पूर्वकालानुभवजनित-संस्कारसहकृतेन्द्रियसम्प्रयोगयुक्तस्य पुरुषस्य तथा ग्रहणमुपपद्यत एव। अन्वयव्यतिरेकाधीनं हि सर्वत्र सामग्रीपरिकल्पनम्। न च ज्वालादि-वत् सादृश्यनिबन्धना प्रत्यभिज्ञेति त्वया वक्तुं शक्यम्, कालद्वयवर्तिनो-र्द्वयोस्सादृश्यस्यानुसन्धातुः ज्ञातुरेकस्यानभ्युपगमात् ॥ २४ ॥

विज्ञानानुमेयार्थवादिनं प्रत्याह। स हि ज्ञाने नीलपीतादिविचित्रा-कारं दृष्ट्वा ज्ञानात्पूर्वक्षणवर्तिनं ज्ञाने स्वाकारं समर्प्य विनष्टमर्थमनु-मिनोति। तत्रोत्तरम्—

नासतोऽदृष्टत्वात् २-२-२५

असतो धर्मिणो धर्मस्यान्यत्र संक्रमणं न संभवति, कुतः? अदृष्ट-त्वात्—न हि धर्मिणि विनष्टे तद्धर्मस्यान्यत्र संक्रमणं क्वचिद्दृष्टम् ॥ २५ ॥

उदासीनानामपि चैवं सिद्धिः २-२-२६

वैभाषिकसौत्रान्तिकयोर्द्वयोरपि साधारणमिदं दूषणम्—एवं सर्व-भावानां क्षणिकत्वाभ्युपगमे सति उदासीनानां--निष्प्रयत्नानामपि ऐहिका-मुष्मिकसर्वार्थसिद्धिः स्यात्। प्रयत्नाद्यनुतिष्ठतस्तदानीमेव विनष्टत्वात्, तत्तत्संस्कारादेरपि कस्यचित् स्थिरस्यानुवर्तमानस्यानभ्युपगमाच्च पश्चा-दागता सिद्धिरहैतुकीति निष्प्रयत्नानामप्यैहिकामुष्मिकसर्वार्थसिद्धिः स्यात् ॥ २६ ॥

इति समुदायाधिकरणम् ॥ ३ ॥

(४) उपलब्ध्यधिकरणम्

नाभाव उपलब्धेः २-२-२७

योगाचाराभिमतः ज्ञानमात्रसद्भाववादः किं समीचीनयुक्तिमूलः, उत नेति संशयः। समीचीनयुक्तिमूल इति पूर्वः पक्षः। बाह्यार्थसद्भाव-वादिनापि तत्तदर्थाकारज्ञानस्य प्रकाशमानत्वमवश्याश्रयणीयम्। सर्वस्य वस्तुनः प्रकाशमानस्य स्वासाधारणेनाकारेण प्रकाश इष्यते। तत्र घट-

पटादिज्ञानस्य घटपटाद्याकार एवाकारः। अन्यथा घटाद्यसाधारण्यं च तत्तज्ज्ञानस्य न संभवति। एकश्चायमाकार उपलभ्यते। स तु ज्ञानस्यैवेति तद्व्यतिरिक्तार्थसद्भाववादोऽनुपपन्नः। तावतैव 'घटोऽयं ज्ञातः' इति व्यवहारश्चोपपद्यते। तस्य बहिर्वदवभासो निर्मूलत्वाद्विभ्रमकृतः।

राद्धान्तस्तु–'घटमहं जानामि' इति सकर्मकस्य सकर्तृकस्य ज्ञाधात्वर्थस्य छेदनादिवत् सर्वलोकसाक्षिकमुपलभ्यमानस्य कर्तृकर्मव्यतिरेकेण केवलस्यैव सद्भावमनुन्मत्तः को ब्रवीति।स्वासाधारणाकारश्च छेदनादिवत् तत्तदर्थव्यवहारयोग्यतापादनाकारेणोपलभ्यते। एवं छेदनादेरप्याकारो द्विधाभवनादिहेतुतयैव कर्तृगतस्योपलभ्यते। न ह्यमूर्तानां क्रियादीनां कर्तृकर्मनिरूपणीयस्वाकाराणां कर्माकारत्वमाश्रीयते।

सूत्रार्थस्तु—नाभाव उपलब्धेः—ज्ञानव्यतिरिक्तार्थाभावो न शक्यते वक्तुम्, उपलब्धेः—'घटमहं जानामि' इति जानातेः कर्मतया कर्तृतया चोपलब्धेः॥ २७॥

## वैधर्म्याच्च न स्वप्नादिवत् २-२-२८

स्वप्नज्ञानादिवच्च जागरितज्ञानानां न मिथ्यार्थत्वम्, तद्वैधर्म्यात् निद्रादिकारणदोषबाधकप्रत्ययरहितत्वादित्यर्थः। चकारात् तान्यपि यथार्थानीत्यभिप्रायः ॥ २८ ॥

## न भावोऽनुपलब्धेः २-२-२९

न केवलस्यार्थशून्यस्य ज्ञानस्य भावः संभवति, क्वचिदप्यनुपलब्धेः। अबाधितप्रतीतिसिद्धस्यासद्भावे सति ज्ञानमात्रस्याप्यसद्भावो न शक्यते वारयितुमित्यभिप्रायः ॥ २९ ॥

इति उपलब्ध्यधिकरणम् ॥ ४ ॥

## (५) सर्वथानुपपत्त्यधिकरणम्

## सर्वथाऽनुपपत्तेश्च २-२-३०

माध्यमिकोक्तसर्वशून्यवादः संभवति, नेति संशयः। संभवतीति पूर्वः पक्षः। विज्ञानं घटादयश्च सर्वे भावा न सन्ति। कुतः? उत्पत्त्यनिरूपणात् घटादिभावानाम्। भावात्तावदुत्पत्तिर्न संभवति। न हि घटादिरुत्पद्यमानः असंमृदितेन मृत्पिण्डादिनोत्पद्यते। नाप्यभावात्, पश्चात्

अभावादुत्पद्यमानो घटादिरभावात्मक एव स्यादिति सर्वशून्यत्वमेव युक्तिमत्। राद्धान्तस्तु—लोके भावाभावशब्दयोस्तद्बुद्ध्योश्च प्रमाणेनोपलभ्यमानस्यैव वस्तुनः अवस्थाविशेष एव भावरूपो विषयः। वर्तमानतयोपलभ्यमानावस्थाविशेषो भावबुद्धिविषयः। तद्विरोध्यवस्थाविशेषः अभावबुद्धिविषयः। अतो न कुतश्चित् त्वदभिप्रेतं तुच्छत्वं सिद्ध्यति। सूत्रार्थस्तु—सर्वथानुपपत्तेश्च—सर्वशून्यवादी सर्वं सदिति प्रतिज्ञाय स्वाभिप्रेतं साधयति, उतासदिति प्रतिज्ञाय, अथ प्रकारान्तरेण प्रतिज्ञाय। सर्वथाऽपि सर्वशून्यत्वानुपपत्तेः स्वाभिमतासिद्धिः, सदसद्भावयोर्विद्यमानवस्तुधर्मतोपपादनात् ॥ ३० ॥

इति सर्वथानुपपत्त्यधिकरणम् ॥ ५ ॥

## (६) एकस्मिन्नसंभवाधिकरणम्

### नैकस्मिन्नसंभवात् २-२-३१

जैनमतं युक्तिमत्, उत नेति संशयः; युक्तिमदिति पूर्वः पक्षः। जीवाजीवशब्दाभिलपनीयभोक्तृभोग्यात्मकं जगत् सत्त्वासत्त्वनित्यत्वानित्यत्वभिन्नत्वाभिन्नत्वैरनैकान्तिकम्; षड्द्रव्यतत्पर्यायात्मनाऽवस्थितत्वात् कृत्स्नस्य जगतो द्रव्यात्मना सत्त्वैकत्वनित्यत्वानि उपपन्नानि; पर्यायात्मना च विपरीतानि। पर्यायाश्च—घटत्वपटत्वाद्यवस्थाविशेषाः। द्रव्यस्वरूपस्यैकत्वात् स्थिरत्वात् सद्बुद्धिबोद्ध्यत्वात् तेन रूपेणैकत्वादि युक्तम्। पर्यायशब्दाभिधेयावस्थाविशेषाणामनेकत्वादस्थिरत्वादसद्बुद्धिबोध्यत्वात् तेन रूपेणासत्त्वानित्यत्वनानात्वानि युक्तानि। प्रतीतिव्यवस्थाप्यत्वात् सर्वस्य वस्तुन उभयाकारप्रतीतेरुभयमुपपन्नम्।

राद्धान्तस्तु — एकस्यास्तित्वनास्तित्वादिभिरनैकान्तिकत्वमयुक्तम्, एकस्मिन् वस्तुनि अस्तित्वनास्तित्वादेः विरुद्धस्य च्छायातपवत् युगपदसंभवात्। तथा हि द्रव्यस्य, तद्विशेषणभूतपर्यायस्य इत्थंशब्दाभिधेयावस्थाविशेषस्य च "इदमित्थम्" इति प्रतीतेः प्रकारप्रकारितया पृथक्पदार्थत्वान्नैकस्मिन् विरुद्धप्रकारभूतसत्त्वासत्त्वरूपधर्मसमावेशो युगपत् संभवति। उत्पत्तिविनाशाख्यपरिणामविशेषास्पदत्वं च द्रव्यस्यानित्यत्वम्; तद्विपरीतं नित्यत्वं तस्मिन् कथं समवैति। विरोधिधर्माश्रयत्वं च भिन्नत्वम्, तद्विपरीतं चाभिन्नत्वं कथं वा तस्मिन् समवैति; यथा अश्वत्वमहिषत्वयोः युगपदेकस्मिन्नसंभवः। एकस्य पृथिवीद्रव्यस्य घटत्वं शरावत्वं च प्रदेशभेदेन; न त्वेकेन प्रदेशेनोभयाश्रयत्वम्। यथैकस्य देव-

दत्तस्योत्पत्तिविनाशयोगित्वं कालभेदेन। न ह्येतावता वस्तुनो द्व्यात्मकत्वम्; अपि तु परिणामशक्तियोगमात्रम्। अतो न युक्तिमत् जैनमतम्। सूत्रार्थस्तु—नैकस्मिन्नसंभवात्—न जैनमतं युक्तम्, कुतः? एकस्मिन् वस्तुनि उक्तरीत्या युगपद्विरुद्धधर्मसमावेशासंभवात्।

अतः सूत्रविरुद्धं वेदान्तवादिभिरपि भेदाभेदसमाश्रयणम् ॥ ३१ ॥

## एवं चात्माकात्स्न्र्यम् २-२-३२

एवमात्माकात्स्न्र्यञ्चानुपपन्नम्; शरीरपरिमाणत्वे ह्यात्मनो बृहतशरीरादल्पीयसि शरीरे प्रविशतः अकात्स्न्र्यम् अपरिपूर्णत्वं प्रसज्येत। तदानीमल्पपरिमाणत्वात् ॥ ३२ ॥

## न च पर्यायादप्यविरोधो विकारादिभ्यः २-२-३३

तथाविधाल्पत्वावस्थायोगेनाप्यविरोधो न संभवति। घटपटादेरिव विकारतत्प्रयुक्तदोषास्पदत्वप्रसङ्गात् ॥ ३३ ॥

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः २-२-३४

जीवस्य यदन्त्यं परिमाणं मोक्षावस्थम्, तस्य पश्चादेकरूपेणावस्थितेः तदेव स्वाभाविकं परिमाणमिति आत्मनश्च तत्परिमाणस्य चोभयोर्नित्यत्वात् पूर्वमपि न शरीरपरिमाणत्वसिद्धिरिति पूर्वावस्थायां न विशेषः; अतः असङ्गतमेवेदं जैनमतम् ॥ ३४ ॥

इति एकस्मिन्नसंभवाधिकरणम् ॥ ६ ॥

## (७) पशुपत्यधिकरणम्

## पत्युरसामञ्जस्यात् २-२-३५

पशुपतिमतं निःश्रेयसार्थिभिरादरणीयम्, उत नेति संशयः। आदरणीयमिति पूर्वः पक्षः। परमपुरुषार्थसाधनाववोधित्वेन निखिलवस्तुसाक्षात्कारसमर्थपशुपतिप्रणीतत्वात्। राद्धान्तस्तु — अनादिनिधनाविच्छिन्नपाठसम्प्रदाय — निरस्तप्रमादादिनिखिलदोषगन्धवेदसिद्धपरावरतत्त्वव्यत्ययप्रतिपादनात्, निमित्तोपादानभेदाभिधानात्, सुराकुम्भस्थापन-तत्स्थदेवतार्चन--मुद्रिकाषट्कविज्ञान-तद्धारणादिवेदविरुद्धाचारप्रतिपादनपरत्वाच्च असामञ्जस्यात् अनादरणीयमिति। सूत्रार्थस्तु—पत्युरसा-

मञ्जस्यात्। 'नैकस्मिन्नसंभवात्' इत्यतो नेत्यनुवर्तते। पत्युः पशुपतेः मतम् अनादरणीयम्। कुतः? वेदविरुद्धतत्त्वाचारावबोधित्वेन असामञ्जस्यात् ॥ ३५ ॥

### अधिष्ठानानुपपत्तेश्च २-२-३६

अनुमेयेश्वराभ्युपगमेन हि प्रधानस्याधिष्ठानमीश्वरस्योच्यते। सशरीरस्यैव कुलालादेरधिष्ठानदर्शनात् अशरीरस्येश्वरस्य प्रधानाधिष्ठानानुपपत्तेश्चासामञ्जस्यम्। सशरीरत्वाभ्युपगमेऽपि तच्छरीरस्य सावयवस्य नित्यत्वे अनित्यत्वे च दोषः पूर्वोक्त इत्यभिप्रायः ॥ ३६ ॥

### करणवच्चेन्न भोगादिभ्यः २-२-३७

क्षेत्रज्ञस्य स्वकरणकलेबराद्यधिष्ठानवदुपपद्यत इति चेत्—न, पुण्यापुण्यरूपकर्मनिमित्तत्वात् क्षेत्रज्ञाधिष्ठानस्य; ईश्वरस्यापि तद्वत्तया तत्फलभोगादिनिखिलतत्स्वभावप्रसक्तेः ॥ ३७ ॥

### अन्तवत्त्वमसर्वज्ञता वा २-२-३८

वाशब्दश्चार्थे। पुण्यापुण्यवत्त्वे तु अन्तवत्त्वं सृष्टिसंहारास्पदत्वमसर्वज्ञता च प्रसज्यत इत्यसमञ्जसमेवेदम् ॥ ३८ ॥

इति पशुपत्यधिकरणम् ॥ ७ ॥

## (८) उत्पत्त्यसंभवाधिकरणम्

### उत्पत्त्यसंभवात् २-२-३९

साङ्ख्यादितन्त्रवत् पाञ्चरात्रतन्त्रमप्यप्रमाणम्, उत नेति संशयः। अप्रमाणमिति पूर्वः पक्षः—वासुदेवात् सङ्कर्षणो नाम जीवो जायते इति श्रुतिविरुद्धजीवोत्पत्त्यादिप्रतिपादनात्, 'चतुर्षु वेदेषु पुरुषार्थमलभमानः' इति वेदगणानादरवचनाच्च। राद्धान्तस्तु — सङ्कर्षणप्रद्युम्नानिरुद्धानां परब्रह्मभावानाम्, "अजायमानो बहुधा विजायते" इति श्रुतिप्रसिद्धस्वेच्छावतारप्रतिपादनान्न क्वचित् श्रुतिविरोधः। जीवाहङ्कारमनश्शब्दाश्च तत्तच्छरीरकाणां सङ्कर्षणादीनामेवाभिधायकाः, "तत् तेज ऐक्षत" इति तेजःप्रभृतिशब्दवत्। 'चतुर्षु वेदेषु पुरुषार्थमलभमानः' इति च अनुदितहोमनिन्दावत्; यथा "ऋग्वेदं भगवोऽध्येमि" इत्यारभ्य "इतिहासपुराणं पञ्चमम्" इत्यादिना सर्वेषु विद्यास्थानेषु चात्मनो वेदनाभाव-

वचनं वक्ष्यमाणप्रशंसार्थम् [इति?] तन्त्रेऽस्मिन् वेदान्तोदितब्रह्मोपासनविधानाद्वेदाविरुद्धतदर्चनादिविधानाच्चावगम्यते इति प्रमाणमेव। सूत्रार्थस्तु—उत्पत्त्यसंभवात्—"न जायते म्रियते वा" इत्यादिश्रुतेः जीवस्योत्पत्त्यसंभवाज्जीवोत्पत्तिवचनाच्च न प्रमाणम् ॥ ३९ ॥

न च कर्तुः करणम् २-२-४०

"सङ्कर्षणात् प्रद्युम्नसंज्ञं मन उत्पद्यते" इति मनसः करणस्य कर्तुर्जीवादुत्पत्तिश्च श्रुतिविरुद्धत्वान्न संभवति; 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इति मनसो ब्रह्मण उत्पत्तिः श्रूयते ॥ ४० ॥

विज्ञानादिभावे वा तदप्रतिषेधः २-२-४१

वाशब्दात् पक्षो विपरिवर्तते; विज्ञानं चादि च विज्ञानादि ब्रह्म; सङ्कर्षणादीनां ब्रह्मभावे सति, "अजायमानो बहुधा विजायते" इति श्रुतिप्रसिद्धस्वेच्छावतारस्यैवात्राभिधानात् तदप्रतिषेधः, प्रामाण्याप्रतिषेधः। सङ्कर्षणादीनां जीवादिसमानाधिकरणतया निर्देशस्तेषामधिष्ठातृतयोपपद्यते ॥ ४१ ॥

विप्रतिषेधाच्च २-२-४२

अस्मिन्नपि तन्त्रे जीवोत्पत्तिविप्रतिषेधाच्च अविरुद्धमिदं तन्त्रम्। "व्यातिरूपेण सम्बन्धस्तस्याश्च पुरुषस्य च। स ह्यनादिरनन्तश्च परमार्थेन निश्चितः" इति हि पुरुषस्योत्पत्तिः प्रतिषिध्यते ॥ ४२ ॥

इति उत्पत्त्यसंभवाधिकरणम् ॥ ८ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तदीपे
द्वितीयस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

अथ तृतीयः पादः

(१) वियदधिकरणम्

न वियदश्रुतेः २-३-१

वियत् उत्पद्यते, नेति संशयः। नोत्पद्यते इति पूर्वः पक्षः, निरवयवस्य सर्वगतस्यात्मन इवोत्पत्त्यसंभवात्। असंभावनीयस्य श्रवणं च न

संभवति। अत उत्पत्तिश्रुतिर्गौणीति। राद्धान्तस्तु—वियत् उत्पद्यत एव; उत्पत्तिश्रुतेः। अतीन्द्रियार्थविषयया श्रुत्याऽभिहितेऽर्थे निरवयवत्वादिहेतुकं नानुत्पत्त्यनुमानमुदेतुमलम्। आत्मनोऽप्यनुत्पत्तिश्रुतेरेव नित्यत्वम्; न निरवयवत्वादिना। सूत्रार्थस्तु—न वियदश्रुतेः—वियत् नोत्पद्यते। कुतः? अश्रुतेः—अश्रवणात्; असंभावनीयस्य श्रवणासंभवात् ॥ १ ॥

## अस्ति तु २-३-२

अस्ति तु वियत उत्पत्तिः, "आत्मन आकाशः संभूतः" इति श्रुतेः; अतीन्द्रियार्थविषयया श्रुत्या प्रमाणान्तराप्रतिपन्नवियदुत्पत्तिप्रतिपादनं संभवत्येव। न "अग्निना सिञ्चेत्" इतिवदयोग्यमित्यर्थः ॥ २ ॥

## गौण्यसंभवाच्छब्दाच्च २-३-३

"तत्तेजोऽसृजत" इति प्रतिपन्नतेजःप्राथम्यविरोधात् मध्ये वियदुत्पत्तिर्न संभवतीत्युत्पत्तिश्रुतिर्गौणी; "वायुश्चान्तरिक्षं चैतदमृतम्" इत्यमृतत्वश्रवणाच्च ॥ ३ ॥

## स्याच्चैकस्य ब्रह्मशब्दवत् २-३-४

"आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः" इत्यादिषु सर्वत्रानुषक्तस्यैकस्य संभूतशब्दस्य आकाशे गौणत्वम्, वाय्वादिषु मुख्यत्वं च संभवति ब्रह्मशब्दवत्। यथैकस्य ब्रह्मशब्दस्यैकप्रकरणे श्रूयमाणस्य "तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते" इति प्रधाने गौणत्वम्, "तपसा चीयते ब्रह्म" इति ब्रह्मणि मुख्यत्वं च। श्रवणावृत्ताविवानुषङ्गेऽप्यभिधानावृत्तेरनुषङ्गोऽपि तत्तुल्य इत्यभिप्रायः ॥ ४ ॥

परिहरति—

## प्रतिज्ञाऽहानिरव्यतिरेकात् २-३-५

"येनाश्रुतं श्रुतम्" इति ब्रह्मविज्ञानेनाकाशादिसर्वविज्ञानप्रतिज्ञाया अहानिः आकाशस्यापि ब्रह्मण उत्पत्त्या तदव्यतिरेकादेव भवति ॥ ५ ॥

इतश्च—

शब्देभ्यः २-३-६

"सदेव सोम्येदमग्र आसीत्", ऐतदात्म्यमिदं सर्वम्" इत्यादिभ्यो ब्रह्मणः प्राक्सृष्टेरेकत्वावधरण—सर्वात्मकत्वादिवादिभ्यः शब्देभ्यश्च वियदुत्पत्तिः प्रतीयते। "तत्तेजोऽसृजत" इत्येतस्मिन् वाक्ये आकाशोत्पत्त्यवचनात् प्रतीयमानं तेजःप्राथम्यं समानप्रकरणस्थैश्च शब्दैः प्रतीयमानां वियदुत्पत्तिं न निवारयतीत्यभिप्रायः।

यावद्विकारं तु विभागो लोकवत् २-३-७

यद्यपि छान्दोग्ये, "तत्तेजोऽसृजत" इतिवदाकाशोत्पत्तिः स्वरूपेण नाभिधीयते—तथापि तस्मिन्नेव, "ऐतदात्म्यमिदं सर्वम्" इत्यादिना आकाशादेः सर्वस्य वस्तुनो ब्रह्मविकारत्ववचनात् यावद्विकारं विभागः= उत्पत्तिरुक्तैवेति गम्यते। लोकवत्—यथा लोके, 'सर्वे एते देवदत्तपुत्राः' इत्यभिधाय तेषां केषाञ्चित् देवदत्तादुत्पत्तिवचनं सर्वेषां तत उत्पत्तिप्रतिपादनार्थमिति गम्यते। आकाशस्यामृतत्ववचनं सुरादिवत् चिरकालस्थायित्वविषयमित्यभिप्रायः ॥ ६ ॥

एतेन मातरिश्वा व्याख्यातः २-३-८

अनेनैव न्यायेन मातरिश्वनोऽप्युत्पत्तिरुक्ता। नायं न्ययातिदेशः, अधिकाशङ्काभावात्। "तेजोऽतस्तथा ह्याह" इति वायोस्तेजस उत्पत्तिं वक्तुं पृथगुपादानम् ॥ ८ ॥

असंभवस्तु सतोऽनुपपत्तेः २-३-९

तुशब्दोऽवधारणार्थः। सतः परमकारणस्य परस्यैव ब्रह्मणः असंभवः उत्पत्त्यसंभवः। तद्व्यतिरिक्तस्य कृत्स्नस्यैव, एकविज्ञानेन सर्वज्ञानप्रतिज्ञाद्यनुपपत्तेः संभव उक्त इत्यभिप्रायः ॥ ६ ॥

इति वियदधिकरणम् ॥ ९ ॥

(२) तेजोधिकरणम्

तेजोऽतस्तथा ह्याह २-३-१०

"आकाशाद्वायुः" इत्यादिव्यवहितकार्याणि किं स्वानन्तराकाशादेः केवलादुत्पद्यन्ते, उत तत्तच्छरीरात् परस्माद् ब्रह्मणः इति संशयः : स्वानन्तरादेवेति पूर्वः पक्षः—"आकाशाद्वायुः। वायोरग्निः"

इति तस्मात्केवलादेवोत्पत्तिश्रवणात् । "एतस्माज्जायते प्राणः" इति परस्माद्ब्रह्मणः सर्वस्योत्पत्तिवादः परम्परयाप्युपपद्यते । राद्धान्तस्तु—"तत्तेज ऐक्षत बहु स्याम्", "ता आप ऐक्षन्त" इति बहुभवनसङ्कल्पपूर्वकसृष्ट्युपदेशात् । केवलस्य त्वीदृशसङ्कल्पानुपपत्तेः, "यस्तेजसि तिष्ठन् यस्य तेजश्शरीरम् ...यस्याकाशश्शरीरम्" इति सर्वेषां परब्रह्मशरीरत्वश्रवणाच्च तत्तच्छब्दवाच्यात् परस्माद् ब्रह्मण एव साक्षात्तेजःप्रभृतीनामपि सृष्टिः ।

सूत्रार्थस्तु—तेजोऽतस्तथा ह्याह—अतः = वायोरेव केवलादुत्पद्यते तेजः; तथा ह्याह श्रुतिः—'वायोरग्निः' इति ॥ १० ॥

## आपः २-३-११

'अतस्तथा ह्याह' इत्यनुवर्तते, अतः तेजसः केवलात् आपः उत्पद्यन्ते, "अग्नेरापः" "तदपोऽसृजत" इति ह्याह ॥ ११ ॥

## पृथिवी २-३-१२

एवं पृथिव्यपि अद्भ्य उत्पद्यते, "अद्भ्यःपृथिवी" "ता अन्नमसृजन्त" इति ह्याह ॥ १२ ॥

अन्नशब्देन कथं पृथिव्यभिधीयत इत्यवगम्यते ; तत्राह—

## अधिकाररूपशब्दान्तरेभ्यः २-३-१३

अन्नशब्देन पृथिव्युच्यते, महाभूतसृष्ट्यधिकारात् । पश्चादपि महाभूतरूपसङ्कीर्तने "यत्कृष्णम्, तदन्नस्य" इति रूपकीर्तनात् । समानप्रकरणे "अद्भ्यः पृथिवी" इति पृथिवीशब्दश्रवणाच्च ॥ १३ ॥

## तदभिध्यानादेव तु तल्लिङ्गात् सः २-३-१४

तुशब्दः पक्षव्यावृत्त्यर्थः । न तेजःप्रभृतयः केवलाः स्वानन्तराणां कारणानि; अपि तु तत्तच्छरीरः सः परमात्मैव तेषां कारणम्; कुतः? परमात्मसृष्टिलिङ्गात् तथाविधाभिध्यानात् । यथैव हि, "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इति, तथैव "तत्तेज ऐक्षत बहु स्यां प्रजायेय" इति बहुभवनसङ्कल्परूपाभिध्यानं परमात्मन एव हि संभवति ॥ १४ ॥

विपर्ययेण तु क्रमोऽत उपपद्यते च २-३-१५

"आकाशाद्वायुः वायोरग्निः" इति पारम्पर्यक्रमात् विपर्ययेण "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी" इति सर्वेषां ब्रह्मानन्तर्यरूपो यः क्रमः, स चातएव तत्तच्छरीराद्ब्रह्मणः सृष्टेरुपपद्यते ॥ १५ ॥

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् २-३-१६

विज्ञानसाधनत्वादिन्द्रियाणि प्राणश्च विज्ञानमित्युच्यन्ते। "एतस्माज्जायते प्राणः" इत्येतद्वाक्यम् आकाशतन्मात्रपञ्चकयोरन्तराले विज्ञानमनसी क्रमेण उत्पद्येते इत्येतत्परम्। [विज्ञानमनसी इति प्राणस्यापि प्रदर्शनार्थम्,] "पृथिव्यप्सु प्रलीयते" इत्यारभ्य, "वायुराकाशे लीयते आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते" इति प्रलयक्रमप्रत्यभिज्ञानात् तल्लिङ्गात्। अतो न श्रुत्यन्तरविरुद्धत्वात् साक्षाद्ब्रह्मणस्सर्वेषां सृष्टिपरमिदं वाक्यम्; अपि तु श्रुत्यन्तरसिद्धपारम्पर्यक्रमपरमिति चेत्—परिहरति—नाविशेषात्-भूततन्मात्रान्तराले विज्ञानमनसोरुत्पत्तावपि तत्तच्छरीरकब्रह्माभिधायित्वाद् भूतेन्द्रियमनःप्राणशब्दानां सर्वेषां साक्षादुत्पत्त्यविशेषात् तत्परमेवेदं वाक्यम् ॥ १६ ॥

लोके तत्तद्वस्तुवाचितया सिद्धस्य शब्दजातस्य ब्रह्मणि वृत्तिरमुख्येत्याशङ्क्याह—

चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात् २-३-१७

तुशब्दश्शङ्कानिवृत्त्यर्थः। स्थावरजङ्गमवस्तुव्यपाश्रयः तद्व्यपदेशः तद्वाचिशब्दो ब्रह्मणि अभाक्तः मुख्य एव, कुतः? तद्भावभावित्वात्—तेजःप्रभृतिषु आत्मतया ब्रह्मभावभावित्वेन सर्वस्य वस्तुनस्तच्छरीरतया तत्प्रकारत्वात् तत्तद्वाचिनां शब्दानां तत्रैव पर्यवसानात्। प्रकारवाचिनां शब्दानां प्रकारिपर्यवसायित्वेनाभाक्तत्वं गवादिशब्देषु सिद्धम् ॥ १७ ॥

इति तेजोधिकरणम् ॥ २ ॥

(३) आत्माधिकरणम्

नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः २-३-१८

किमात्मोत्पद्यते, न वेति संशयः। उत्पद्यत इति पूर्वः पक्षः। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञादेः, "तोयेन जीवान् व्यससर्ज भूम्याम्"

"प्रजापतिः प्रजा असृजत" इत्यादिसृष्टिवचनाच्च। नित्यतादिश्रुतिराकाशाद्यमृतत्ववचनवत् नेया। राद्धान्तस्तु–नात्मोत्पद्यते, अनुत्पत्तिश्रुतेः; "न जायते म्रियते वा विपश्चित्" इति जीवोत्पत्तिर्निषिध्यते। "अजो नित्यः", "नित्यो नित्यानाम्" इत्यादिश्रुतिभ्यो नित्यत्वावगमात्। जीवोत्पत्तिपक्षे अकृताभ्यागमकृतविप्रणाशादिप्रसङ्गात्, वैषम्यनैर्घृण्यप्रसङ्गाच्च। जीवस्य सृष्टिवचनं भोक्तृत्वानुगुणज्ञानविकासाभिप्रायम्। सूत्रमपि व्याख्यातम् ॥ १८ ॥

इति आत्माधिकरणम् ॥ ३ ॥

(४) ज्ञाधिकरणम्

## ज्ञोऽत एव २-३-१९

किं जीवश्चैतन्यमात्रवपुः, उत जडस्वरूप एवागन्तुकचैतन्यगुणः, अथ ज्ञातृत्वैकस्वरूप इति संशयः। चैतन्यमात्रवपुरिति प्रथमः पक्षः। "विज्ञानं यज्ञं तनुते", "यो विज्ञाने तिष्ठन्", "ज्ञानस्वरूपमत्यन्तनिर्मलम्" इत्यादिश्रुतिस्मृतिभ्यः। द्वितीयस्तु—सुषुप्तिमूर्च्छादिषु सतोऽप्यात्मनश्चैतन्यानुपलब्धेः, जाग्रतोऽपीन्द्रियव्यापारान्वयतिरेकानुविधायित्वाच्चैतन्यस्य, "न प्रेत्य संज्ञास्ति" इति मुक्तस्य चैतन्यप्रतिषेधाच्च पाषाणकल्प एवागन्तुकचैतन्यगुणः। सर्वत्र कार्योपलब्धेस्सर्वत्र सन्निधानात् शरीरगमनेनैव कार्यसंभवे गतिकल्पनायोगात् सर्वगतश्चेति। राद्धान्तस्तु—"अथ यो वेदेदं जिघ्राणीति स आत्मा मनसैतान् कामान् पश्यन् रमते", "न पश्यो मृत्युं पश्यति" "सर्वं ह पश्यः पश्यति", "द्रष्टा श्रोता घ्राता रसयिता" इत्यादिश्रुतिभ्यो बद्धमुक्तोभयावस्थो ज्ञातैवात्मा। ज्ञानमात्रव्यपदेशस्तु ज्ञानस्य प्रधानगुणत्वात्, स्वरूपानुबन्धित्वेन स्वरूपनिरूपकगुणत्वात्, आत्मस्वरूपस्य ज्ञानवत्स्वप्रकाशत्वाद्वोपपद्यते। सुषुप्तिमूर्च्छादौ सदेव ज्ञानं कर्मणा संकुचितमनभिव्यक्तमपि जागरादौ विकसितमभिव्यज्यत इति न विरोधः। "न प्रेत्य संज्ञाऽस्ति" इति सांसारिकदेहाद्यस्मरणविषयम्; "नोपजनं स्मरन्निदं शरीरम्" इत्यादिनैकार्थ्यात्। सर्वगतत्वं तु अणुत्वगत्यादिश्रुतिविरुद्धम्। सूत्रार्थस्तु ज्ञोऽत एव। अतः श्रुतेः ज्ञातैव ॥ १९ ॥

## उत्क्रान्तिगत्यागतीनाम् २-३-२०

श्रुतेरिति वर्तते। "तेन प्रद्योतेनैष आत्मा निष्क्रामति", "ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" "तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे" इत्याद्युत्क्रान्तिगत्यागतीनां श्रवणादणुर्जीवः ॥ २० ॥

## स्वात्मना चोत्तरयोः २-३-२१

चशब्दोऽवधारणार्थः। यद्यप्युत्क्रान्तौ स्थितस्य शरीरविश्लेषेण कथंचित्संपाद्यत्वमस्ति; उत्तरयोः—गमनागमनयोस्तु स्वात्मनैव सम्पाद्यत्वमवश्याभ्युपेयम् ॥ २१ ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् २-३-२२

"योऽयं विज्ञानमयः" इति जीवं प्रस्तुत्य "स वा एष महानज आत्मा" इति महत्त्वश्रुतेः नाणुर्जीव इति चेन्न—इतराधिकारात्=जीवेतरपरमात्माधिकारात्। "यस्यानुवित्तः प्रतिबुद्ध आत्मा" इति हि मध्ये परमात्मा प्रस्तुतः ॥ २२ ॥

## स्वशब्दोन्मानाभ्यां च २-३-२३

"एषोऽणुरात्मा चेतसा वेदितव्यः यस्मिन् प्राणः पञ्चधा संविवेश" इति साक्षादणुशब्दादणुरेवायम्। उन्मानाच्चाणुरेव। उन्मानम् उद्धृत्य मानम्। "आराग्रमात्रो ह्यवरोऽपि दृष्टः" इत्याराग्रमुद्धृत्य तन्मानत्वं हि जीवस्य श्रूयते ॥ २३ ॥

आत्मनोऽणुपरिमाणस्य सकलदेहव्यापिसुखाद्यनुभवः कथमित्यत्र मतान्तरेण परिहारमाह—

## अविरोधश्चन्दनवत् २-३-२४

यथा हरिचन्दनबिन्दुः देहैकदेशवर्त्यपि सकलदेहवर्तिनमाह्लादं जनयति, तद्वदविरोधः ॥ २४ ॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि २-३-२५

चन्दनबिन्दोर्देहैकदेशविशेषस्थित्यपेक्षस्तथाभावः; आत्मनस्तु न तथेति चेन्न—आत्मनोऽपि तथाभावाभ्युपगमात्; हृदि ह्ययमात्मा स्थितः

इति श्रूयते "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः" इत्यादौ ॥ २५ ॥

स्वमतेनाह—

गुणाद्वाऽऽलोकवत् २-३-२६

वाशब्दो मतान्तरव्यावृत्त्यर्थः। आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्यावस्थितः; यथा द्युमणिमणिप्रभृतीनामेकदेशवर्तिनामालोकः तद्गुणः अनेकदेशव्यापी दृश्यते ॥ २६ ॥

"विज्ञानं यज्ञं तनुते" इत्यादौ ज्ञानमेव आत्मेति व्यपदिश्यते इति चेत्—तत्राह—

व्यतिरेको गन्धवत् तथा च दर्शयति २-३-२७

जानामि इत्यात्मगुणत्वेन प्रतीतेः व्यतिरेकोऽभ्युपगमनीयः; यथा गन्धवती पृथिवी इत्युपलब्धौ गन्धस्तद्गुणस्तद्व्यतिरिक्तः। दर्शयति च श्रुतिः, "जानात्येवायं पुरुषः" इति ॥ २७ ॥

पृथगुपदेशात् २-३-२८

न केवलं जानामीति पृथगुपलब्धिमात्रम्; आत्मनः पृथक्त्वेनोपदिश्यते च ज्ञानम् "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इति ॥ २८ ॥

तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् २-३-२९

ज्ञानगुणसारत्वादात्मनो ज्ञानमिति व्यपदेशः; यथा "प्राज्ञेन", "ब्रह्मणा विपश्चिता", "यस्सर्वज्ञस्सर्ववित्" इति सर्वज्ञ एव सर्वज्ञानगुणसारत्वात् "सत्यं ज्ञानम्" इति व्यपदिश्यते ॥ २९ ॥

यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् २-३-३०

ज्ञानस्य यावदात्मस्वरूपभावित्वाच्च तेन तद्व्यपदेशो न दोषः, खण्डादिषु तथा दर्शनात्; खण्डादिषु हि यावत्स्वरूपभाविधर्मत्वेन गोत्वस्य गौरिति व्यपदेशो दृश्यते; चकारादात्मनः स्वप्रकाशत्वेन ज्ञानमिति व्यपदेशो न दोष इत्युच्यते ॥ ३० ॥

सुषुप्त्यादिषु ज्ञानस्यानुपलब्धेर्न यावदात्मभावित्वमित्याशङ्क्याह—

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् २-३-३१

तुशब्दः शङ्कानिवृत्त्यर्थः ; सुषुप्त्यादिष्वपि सतो ज्ञानस्यानभिव्यक्तस्य जागर्यादिष्वभिव्यक्तिसंभवात् यावदात्मभाव्येव ज्ञानम् ; पुंस्त्वादिवत्— पुंस्त्वमिति पुरुषासाधारणधातुरुच्यते ; यथा सप्तधातुमयत्वेन शरीरस्य पुंस्त्वस्य बाल्येऽपि सतोऽनभिव्यक्तस्य सप्तमधातोः युवत्वेऽभिव्यक्तिः ॥ ३१ ॥

एवमात्मनो ज्ञातृत्वमणुत्वं चोक्त्वा पक्षान्तरे दोषमाह—

## नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा २-३-३२

अन्यथा = ज्ञानात्मवादे सर्वगतात्मवादे च उपलब्ध्यनुपलब्धी नित्यवत् प्रसज्येयाताम् ; उपलब्ध्यनुपलब्ध्योरन्यतरनियमो वा । ज्ञानात्मपक्षे तावत् ज्ञानस्य प्रकाशस्वभावत्वात् प्रकाशपर्यायोपलब्धेर्नित्यवत्प्रसक्तिरनिवार्या, ज्ञाने विद्यमाने सति हेत्वन्तरेणानुपलब्धिजननायोगात् ज्ञानमेवानुपलब्धेरपि हेतुरित्यास्थेयम् । ज्ञानस्य सर्वदा वर्तमानत्वात् सर्वदोभयप्रसक्तिः । अथ युगपद्विरुद्धकार्यजननायोगात् ज्ञानमुपलब्ध्यनुपलब्ध्योरन्यतरहेतुरास्थीयते तदाऽन्यतरनियमः स्यात् । सर्वगतत्वपक्षे, यथा ज्ञानात्मवादिनाम्, तथैव हेतुजन्यज्ञानवादिनोऽपि सर्वेषामात्मनां सर्वगतत्वे सर्वस्यात्ममनस्संयोगादेः हेतोः सर्वेषां साधारणत्वात् उक्तरीत्या तथैव प्रसक्तिः । अदृष्टोत्पत्तिहेतोरपि सर्वस्य साधारणत्वाददृष्टेनापि न व्यवस्था ॥ ३२ ॥

इति ज्ञाधिकरणम् ॥ ४ ॥

### (५) कर्त्रधिकरणम्

## कर्ता शास्त्रार्थवत्त्वात् २-३-३३

आत्मनो ज्ञातृत्ववत् कर्तृत्वमप्यस्ति, नेति संशयः । प्रधानस्यैव कर्तृत्वादात्मनो न कर्तृत्वमस्तीति पूर्वः पक्षः । "अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते", "नान्यं गुणेभ्यः कर्तारम्" इत्यादिषु गुणानामेव

कर्तृत्ववचनात् । राद्धान्तस्तु—स्वर्गापवर्गसाधनानुष्ठानविधानशास्त्राणामर्थवत्त्वाय कर्तैवात्मा, बोद्धुरेव हि शासनम्; नाचेतनस्य प्रधानस्य। "यजेत", "उपासीत" इति कर्तरि लकारः। अतः कर्तारमेव बोधयति शास्त्रम्। सूत्रमपि व्याख्यातम् ॥ ३३ ॥

## उपादानाद्विहारोपदेशाच्च २-३-३४

उपादानात् उपदिश्यमानात्, विहारोपदेशाच्च। उपदिश्यते उपादानं विहारश्च, "एवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते" इति उपादानविहारयोः कर्तृत्वोपदेशाच्च कर्ता ॥ ३४ ॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः २-३-३५

"विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति यज्ञादिकर्मसु आत्मनः कर्तृत्वोपदेशाच्च कर्ता। विज्ञानशब्देन नात्मनो व्यपदेशः, अपित्वन्तःकरणरूपबुद्धेरेवेति चेत्—तथासति विज्ञानेनेति करणविभक्तिनिर्देशः स्यात् ॥ ३५ ॥

## उपलब्धिवदनियमः २-३-३६

प्रधानस्य कर्तृत्वेन आत्मनो भोक्तृत्वमिति पक्षे पूर्वोक्तोपलब्ध्यनियमवत् प्रधानस्य सर्वसाधारणत्वात् भोक्तृत्वानियमः। अन्तःकरणभेदेऽपि सर्वेषामात्मनां सर्वगतत्वेन साधारण्यमनिवार्यम् ॥ ३६ ॥

## शक्तिविपर्ययात् २-३-३७

बुद्धेः कर्तृत्वे कर्तुरन्यस्य भोक्तृत्वायोगात् भोक्तृत्वशक्तिरपि बुद्धेरेवेति आत्मनो भोक्तृत्वशक्तिविपर्ययः—हानिरित्यर्थः ॥ ३७ ॥

## समाध्यभावाच्च २-३-३८

प्रकृतेः कर्तृत्वे मोक्षसाधनभूतसमाध्यभावश्च स्यात्। 'प्रकृतेरन्योऽस्मी' ति समाधाने प्रकृतेः कर्तृत्वायोगात् ॥ ३८ ॥

यथा च तक्षोभयथा २-३-३९

आत्मनः कर्तृत्वे 'भोगवाञ्छायां करोति, अन्यदा न करोति' इत्युभयप्रकारव्यवस्थोपपद्यते; यथा तक्षा स्वकार्ये इच्छया व्यवस्थितः। बुद्धेः कर्तृत्वे अचेतनत्वेन स्वेच्छायां अभावाद् व्यवस्था न सिध्यतीत्यभिप्रायः ॥ ३९ ॥

इति कर्त्रधिकरणम् ॥ ५ ॥

(६) परायत्ताधिकरणम्

परात्तु तच्छ्रुतेः २-३-४०

कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः २-३-४१

इदानीं जीवस्य कर्तृत्वं किं परमात्मायत्तम्? उत स्वायत्तमिति संशयः। स्वायत्तमिति पूर्वः पक्षः, विधिनिषेधशास्त्रानर्थक्यापत्तेः। यः स्वबुद्ध्यैव प्रवृत्तिनिवृत्तिशक्तः, स एव हि नियोज्यो निग्रहानुग्रहास्पदं च भवतीति। राद्धान्तस्तु, "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा", "य आत्मानमन्तरो यमयति" इत्यादिश्रुतेः परमात्मायत्तमेव कर्तृत्वम्; तच्च जीवेन स्वबुद्ध्या कृतं प्रयत्नमपेक्ष्य तदनुमतिदानेनेति विधिनिषेधावैयर्थ्यम्; अतएव निग्रहानुग्रहास्पदं च। सूत्रद्वयमपि व्याख्यातम् ॥ ४०-४१ ॥

इति परायत्ताधिकरणम् ॥ ६ ॥

(७) अंशाधिकरणम्

अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके २-३-४२

किं जीवः परमात्मनोऽत्यन्तभिन्नः, उत परमात्मैवाज्ञः, अथ परमात्मैवोपाधिसम्बद्धः, परमात्मांशो वेति संशयः; अत्यन्तभिन्न इति प्रथमः पक्षः; "पृथगात्मानं प्रेरितारञ्च मत्वा", "तयोरन्यः पिप्पलं

स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति", "अनीशश्चात्मा बध्यते भोक्तृभावात्'', "सर्वस्य वशी सर्वस्येशानः" इत्यादिभेदश्रुतेः; जीवपरमात्मनोः कर्मपरतन्त्रतातद्विपरीतत्वश्रुतेश्च। अभेदश्रुतयः 'नरपतिरेव सर्वलोकः' इतिवदौपचारिक्यः—इति। भेदश्रुतीनामविद्वद्विषयतया वा उपाधिसम्बन्ध (द्ध?) विषयतया वा अमुख्यवृत्तिसंभवादभेदश्रुतिमुख्यत्वाय अज्ञः परमात्मा, उपाधिसम्बद्धो वा जीव इति युक्तम्। राद्धान्तस्तु—नानात्वैकत्वव्यपदेशात् परमात्मनः सत्यसङ्कल्पत्वसर्वज्ञत्वनिरवद्यत्वश्रुतेरज्ञत्वोपाधिसम्बन्धाद्यनुपपत्तेर्जीवशब्दस्य जीवशरीरकपरमात्मवाचित्वेन "तत्त्वमसि", "अयमात्मा ब्रह्म" इति सामानाधिकरण्यस्य मुख्यत्वात् शरीरशरीरिणोर्विशेषणविशेष्यभूतयोः स्वरूपस्वभावभेदेन च भेदश्रुतेश्च मुख्यत्वाद्विशिष्टवस्त्वेकदेशतया च विशेषणस्य परमात्मांशो जीवः। जीवशरीरकत्वञ्च परमात्मनः, "यस्याऽऽत्मा शरीरम्" इत्यादिषु सिद्धम्। सूत्रार्थस्तु—अंशः—परमात्मांशो जीवः, नानाव्यपदेशात्—भेदव्यपदेशात, अन्यथा च—अभेदव्यपदेशाच्च। उक्तनीत्या उभयमुख्यत्वायेत्यभिप्रायः; दाशकितवादित्वमप्यधीयत एके,—"ब्रह्म दाशाः ब्रह्म दासाः" इत्यादिना दाशकितवादित्वमप्यधीयत एके शाखिनः; सर्वजीवव्यापित्वादभेदोपदेशस्य तत्रात्यादरः प्रतीयत इत्यर्थः ॥ ४२ ॥

## मन्त्रवर्णात् २-३-४३

मन्त्रवर्णाच्चांश एव जीवः, "पादोऽस्य विश्वा भूतानि" इति। पादशब्दः अंशवाची ॥ ४३ ॥

## अपि स्मर्यते २-३-४४

"ममैवांशो जीवलोके जीवभूतः सनातनः" इति जीवस्य परमात्मांशत्वं स्मर्यते च ॥ ४४ ॥

एकद्रव्यैकदेशत्वं ह्यंशत्वम्; अतो जीवस्य ब्रह्मैकदेशत्वेन जीवदोषा ब्रह्मणो दोषा एवेत्याशङ्क्याह—

## प्रकाशादिवत्तु नैवं परः २-३-४५

तुशब्दः शङ्कानिवृत्त्यर्थः। प्रकाशवत्-मणिद्युमणिप्रभृतीनां प्रकाशविशिष्टानां विशेषणभूतः प्रकाशः यथा अंशः, तद्वज्जीवशरीरतया जीवविशिष्टस्य

ब्रह्मणोंऽशो जीवः। विशिष्टवस्त्वेकदेशतया विशेषणं विशिष्टस्यांशः। आदिशब्दात् द्रव्यविशेषणतैकस्वभावजातिगुणशरीराणि गृह्यन्ते; विशेषणविशेष्ययोः स्वरूपस्वभावभेदाद्विशेषणभूतो जीवः यत्स्वरूपो यत्स्वभावश्च, नैवं परः। सर्वज्ञस्सत्यसङ्कल्पो नित्यनिरवद्यश्चेत्यर्थः ॥ ४५ ॥

## स्मरन्ति च २-३-४६

प्रकाशादिवत् जीवस्यांशत्वं पराशरादयः स्मरन्ति, "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्"। तथा परं प्रति शरीरत्वं च, "यत्किञ्चित् सृज्यते येन सत्त्वजातेन वै द्विज। तस्य सृज्यस्य संभूतौ तत् सर्वं वै हरेस्तनुः" इति ॥ ४६ ॥

ब्रह्मांशत्वेन च सर्वेषामात्मनां समत्वाद्वेदाध्ययनादौ केषांचिदनुज्ञा, केषांचित् परिहारश्च कथमुपपद्यत इत्यत्राह—

## अनुज्ञापरिहारौ देहसम्बन्धात् ज्योतिरादिवत् । २-३-४७

ब्राह्मणादिशुच्यशुचिदेहसम्बन्धात् अनुज्ञापरिहारौ उपपद्येते, ज्योतिरादिवत् ज्योतिः-अग्निः। यथा श्रोत्रियागाराद्ग्निराह्रियते, श्मशानादेस्तु परिह्रियते; यथा च अन्नादिः श्रोत्रियादेरनुज्ञायते, अभिशस्तादेश्च परिह्रियते, तद्वत् ॥ ४७ ॥

## असन्ततेश्चाव्यतिकरः २-३-४८

जीवानां प्रतिशरीरं भिन्नत्वादणुत्वेन तत्रतत्रावच्छिन्नत्वाच्च न भोगव्यतिकरश्च। अज्ञब्रह्मजीववादे चोपहितब्रह्मजीववादे च अज्ञानसम्बन्धि चोपाधिसम्बन्धि च ब्रह्मैवेति भोगव्यवस्था न सिद्ध्यतीत्यभिप्रायः ॥ ४८ ॥

## आभासा एव च २-३-४९

अज्ञब्रह्मजीववादे सर्वज्ञस्य ब्रह्मणः अज्ञानकल्पनस्वरूपतिरोधानकल्पनाहेतवः आभासा एव। चकारान्निरवद्यत्वादिश्रुतिविरोधश्च ॥ ४९ ॥

पारमार्थिकोपाधिसम्बन्धिब्रह्मजीववादे अनाद्यदृष्टप्रवाहेणोपधिप्रवाहानादित्वात् तत्सम्बन्धिनि ये दोषाः, न ते ब्रह्मणि प्रसज्यन्त इत्यत्राह—

अदृष्टानियमात् २-३-५०

अदृष्टैस्तत्कृतोपाधिभिश्च ब्रह्मणश्छेदासंभवात् तत्कृता दोषा ब्रह्मण्येव संभवेयुः ॥ ५० ॥

अभिसन्ध्यादिष्वपि चैवम् २-३-५१

अदृष्टहेतुभूताभिसन्ध्यादिष्वपि उपाधिब्रह्मव्यतिरिक्तवस्त्वन्तराभावात् पूर्वपूर्वोपाधियुक्तं ब्रह्मवेति न कश्चिद्विशेषः ॥ ५१ ॥

प्रदेशभेदादिति चेन्नान्तर्भावात् २-३-५२

उपाधिसंबन्धिब्रह्मप्रदेशादनुपहितब्रह्मप्रदेशो भिद्यते। अतो व्यवस्थेति चेन्न—उपाधिषु गच्छत्सु पूर्वमनुपहितब्रह्मप्रदेशस्याप्यन्तर्भावात् ॥ ५२ ॥

इति अंशाधिकरणम् ॥ ७ ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे द्वितीयस्याध्यायस्य

तृतीयः पादः।

अथ द्वितीयेऽध्याये चतुर्थः पादः

(१) प्राणोत्पत्त्यधिकरणम्

तथा प्राणाः २-४-१

किं जीववत् इन्द्रियाण्यपि नोत्पद्यन्ते, उत वियदादिवदुत्पद्यन्त इति संशयः। नोत्पद्यन्त इति पूर्वः पक्षः। प्रलयकाले अवस्थानश्रुतेः, उत्पत्तिवादाः जीवोत्पत्तिवादवत् नेयाः। "असद्वा इदमग्र आसीत्... ऋषयो वाव तेऽग्रे सदासीत्। के ते ऋषय इति। प्राणा वाव ऋषयः" इतीन्द्रियाणां तदानीं स्थितिः श्रूयते। राद्धान्तस्तु—प्राक्सृष्टेरेकत्वावधारणात्, "एतस्माज्जायते" इत्युत्पत्तिवादात्, उत्पत्तिनिषेधनित्यत्व-

वचनाभावाच्च वियदादिवदुत्पद्यन्ते। "प्राणा वाव ऋषयः" इति प्राण-शब्दनिर्दिष्टः परमात्मा। सूत्रार्थस्तु—तथा प्राणाः। यथा जीवा नोत्पद्यन्ते, तथा प्राणा अपि ॥ १ ॥

बहुत्वासंभवाद् बहुवचनश्रुतिर्गौणीत्याह—

गौण्यसंभवात् तत्प्राक्छ्रुतेश्च २-४-२

"प्राणा वाव" इति बहुवचनश्रुतिर्गौणी, तदानीं बहुत्वासंभवात्, तस्य परमात्मन एव प्रागवस्थानश्रुतेश्च ॥ २ ॥

इतश्च—

तत्पूर्वकत्वाद्वाचः २-४-३

वाचः=परमात्मव्यतिरिक्तनामधेयस्य तत्पूर्वकत्वात् वियदादि-सृष्टिपूर्वकत्वादित्यर्थः। "तद्धेदं तर्ह्यव्याकृतमासीत्। तन्नामरूपाभ्यां व्याक्रियत" इत्यादिश्रुतेः। अतः परमात्मैव प्राणशब्दनिर्दिष्टः ॥ ३ ॥

इति प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

(२) सप्तगत्यधिकरणम्

सप्त गतेर्विशेषितत्वाच्च २-४-४

किमिन्द्रियाणि सप्तैव, उतैकादशेति संशयः। सप्तैवेति पूर्वः पक्षः "सप्त प्राणाः प्रभवन्ति" इत्यादिषु सप्तानामेव जीवेन सह सञ्चार-श्रवणात्; "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिश्च" इति सप्ता-नामेव योगकाले ज्ञानानि इति विशेषितत्वाच्च; श्रोत्रादीनि ज्ञानेन्द्रि-याणि वागादीनि च कर्मेन्द्रियाणि मन इत्येकादश; कथं? वाग्घस्ता-दीनामपि श्रोत्रादित् कार्यभेदेन जीवोपकरणत्वाविशेषात्, "दशेमे पुरुषे प्राणाः आत्मैकादशः", "इन्द्रियाणि दशैकं च" इत्यादिश्रुति-स्मृतिभ्यः। वागादीनां जीवेन सह गमनाभावात् सप्तानामेव प्रयाण-काले गतिश्रवणम्। योगकाले विशेषितत्वं च ज्ञानेन्द्रियाणां मनसस्तद्-वृत्तिरूपबुद्धेश्च प्राधान्यात्। सूत्रार्थस्तु—सप्त गतेर्विशेषितत्वाच्च—सप्ता-नामेव गतिश्रवणात्, ज्ञानानि पञ्च मनो बुद्धिश्चेति विशेषितत्वाच्च तानि सप्तैव ॥ ४ ॥

## हस्तादयस्तु स्थितेऽतो नैवम् २-४-५

नैवम्, न सप्तैवेन्द्रियाणीत्यर्थः, श्रोत्रादीनि ज्ञानेन्द्रियाणि पञ्च, वाग्घस्तादीनि च कर्मेन्द्रियाणि पञ्च, मनश्चेत्येकादश। तत्र श्रोत्रादीनि जीवेन सह शरीरान्तरगमनेऽपि गच्छन्ति; वाग्घस्तादीनि कर्मेन्द्रियाणि तु स्थिते शरीरे तेनैव सहोत्पत्तिविनाशयोगीन्युपकारकाणि। अतो नैवम्— इत्यन्वयः; एषां जीवोपकारकत्वाविशेषात्, "दशेमे पुरुषे प्राणाः आत्मैकादशः" इत्यादिवचनाच्चेत्यभिप्रायः ॥ ५ ॥

इति सप्तगत्यधिकरणम् ॥ २ ॥

### (३) प्राणाणुत्वाधिकरणम्

## अणवश्च २-४-६

इन्द्रियाणि किं सर्वगतानि, उताणुपरिमाणानीति संशयः सर्वगतानीति पूर्वः पक्षः, "त एते सर्व एव समाः सर्वेऽनन्ताः" इति प्राणानामानन्त्यश्रवणात्। राद्धान्तस्तु—"प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति श्रवणात् परिमितत्वे सति अप्रत्यक्षत्वात् अणवः। आनन्त्यश्रुतिस्तु, 'अथ यो हैताननन्तानुपास्ते,' इत्युपासनविधानादुपासनफलबाहुल्यविषया ॥ ६ ॥

## श्रेष्ठश्च २-४-७

श्रेष्ठः प्राणश्चोत्पद्यते। नात्र न्यायातिदेशः, अधिकाशङ्काभावात्। पृथग्योगकरणमुत्तरचिन्तार्थम्। श्रेष्ठः पञ्चवृत्तिः प्राणः। प्राणश्रैष्ठ्यं तु प्राणसंवादे तस्य श्रैष्ठ्याभिधानात् ॥ ७ ॥

इति प्राणाणुत्वाधिकरम् ॥ ३ ॥

### (४) वायुक्रियाधिकरणम् ॥ ३ ॥

## न वायुक्रिये पृथगुपदेशात् २-४-८

किमयं श्रेष्ठप्राणो वायुमात्रम्, उत तत्क्रिया, अथ वायुरेव कंचन विशेषमापन्नः—इति संशयः। वायुमात्रमिति प्रथमः पक्षः, "यः प्राण स वायुः" इति व्यपदेशात्। वायुमात्रे प्राणप्रसिद्ध्यभावात्-उच्छ्वासनिःश्वासरूपवायुक्रियायां प्राणप्रसिद्धेः वायोः क्रियाविशेष एव

प्राण इति द्वितीयः पक्षः। राद्धान्तस्तु—न वायुमात्रं तत्क्रिया वा प्राणः, अपितु देहधारणयोग्यतादिरूपविशेषमापन्नो वायुः, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुः" इति वायुप्राणयोः पृथगुत्पत्त्युपदेशात्। क्रियायाश्च पृथगुपदेशो न संभवति, तेजःप्रभृतिष्वदर्शनात्। चक्षुरादिकरणैस्सह जीवोपकरणतयोपदेशात्, देहेन्द्रियधारणरूपोपकाराधिक्यात् चक्षुरादिभ्यः प्राधान्यवचनाच्च न क्रियामात्रम्। सूत्रार्थस्तु—न वायुक्रिये पृथगुपदेशात्—वायुमात्रं तत्क्रिया वा न प्राणः; पृथगुपदेशात्—"प्राणो जायते", "खं वायुः" इति हि पृथगुत्पत्तिरुपदिश्यते ॥ ८ ॥

वायोः पृथगुपदिष्टतया तस्मादन्योऽयं प्राणः किमग्न्यादिवत् भूतान्तरमित्याशङ्क्याह—

चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः २-४-९

तुशब्दः शङ्कानिवृत्त्यर्थः; प्राणो नाकाशादिवद् भूतान्तरम्; अपितु वायुरेवावस्थान्तरमापन्नः चक्षुरादिवत् जीवोपकरणम्। तच्च उपकरणत्वमुपकरणभूतैरिन्द्रियैः सहशिष्ट्यादिभ्योऽवगम्यते। शिष्टिः—शासनम् उपदेशः। उपदिश्यते ह्ययं प्राणश्चक्षुरादिभिस्सह प्राणसंवादादिषु। तत्सजातीयत्वे ह्येतदुपपद्यते। प्राणशब्दगृहीतेषु करणेष्वस्य "अथ ह य एवायं मुख्यः प्राणः" इति विशिष्याभिधानमादिशब्देनोक्तम्। तदपि तत्सजातीयत्वे हि संभवति ॥ ९ ॥

अकरणत्वाच्च न दोषस्तथा हि दर्शयति २-४-१०

अकरणत्वात्। करणं क्रिया अकरणत्वं क्रियारहितत्वम्। अक्रियत्वादस्य प्राणस्य जीवं प्रत्युपकारविशेषरूपक्रियारहितत्वाच्च यो दोष उद्भाव्यते, स नास्ति। यत उपकारविशेषरूपां शरीरेन्द्रियधारणात्मक्रियां दर्शयति श्रुतिः—"यस्मिन्नुत्क्रान्त इदं शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः" इति वागादिमुख्यप्राणपर्यन्तानि करणानि प्रत्येकमभिधाय प्राणोत्क्रमणे शरीरेन्द्रियशैथिल्याभिधानात् ॥ १० ॥

प्राणापानादिनामभेदेन पञ्चधाऽवस्थित एक एव प्राण इत्याह—

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते २-४-११

प्राणापानादिवृत्तिभेदात् प्राण एव पञ्चधा व्यपदिश्यते ; मनोवत्— यथैकमेव मनः कामादिवृत्तिभेदेन तैः शब्दैरभिधीयत इति श्रुतिराह, "कामस्सङ्कल्पः" इत्यारभ्य "ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" इति- [तथा ?] अपानादि समानपर्यन्तं व्यपदिश्य, "एतत् सर्वं प्राण एव" इति व्यपदेशात् प्राण एव पञ्चवृत्तिरित्यवगम्यते ॥ ११ ॥

इति वायुक्रियाधिकरणम् ॥ ४ ॥

## (५) श्रेष्ठाणुत्वाधिकरणम्

अणुश्च २-४-१२

किमयं प्राणः सर्वगतः, उताणुरिति संशयः। सर्वगत इति पूर्वः पक्षः; "सम एभिस्त्रिभिर्लोकैः, समः" इत्यादिना प्राणस्यानन्त्यव्यपदेशात्। राद्धान्तस्तु—"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इत्युत्क्रान्तिवचनादिन्द्रियवत् प्राणश्चाणुः। एवमणुत्वे निश्चिते सति सर्वस्य प्राणायत्तस्थितित्वेन वैभववादः। सूत्रमपि व्याख्यातम् ॥ १२ ॥

इति श्रेष्ठाणुत्वाधिकरणम् ॥ ५ ॥

## (६) ज्योतिराद्यधिष्ठानाधिकरणम्

ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात् २-४-१३

अग्न्यादीनां जीवस्य चेन्द्रियाधिष्ठानं परमात्मायत्तमिति, "परात्तु तच्छ्रुतेः" इत्युक्तमेव स्मारयति विषयव्याप्तिज्ञापनाय। प्राणवता—जीवेन सह ज्योतिरादेः—अग्न्यादेः वागाद्यधिष्ठानम् तदामननात्—परमात्मामननाद्भवति। आमननम्—आभिमुख्येन मननम्। तत्सङ्कल्पादेव भवतीत्यर्थः; "योऽग्नौ तिष्ठन्...योऽग्निमन्तरो यमयति" इत्यादिशब्दात् ॥ १३ ॥

तस्य च नित्यत्वात २-४-१४

सर्वेषामात्मतयाऽनुप्रविश्य सर्वनियमनस्य नित्यत्वात्=परमात्मनः अवर्जनीयत्वादित्यर्थः "तत् सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः ॥ १४ ॥

इति ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६ ॥

(७) इन्द्रियाधिकरणम्

त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् २-४-१५

किं प्राणशब्दनिर्दिष्टाः सर्वे एवेन्द्रियाणि, उत श्रेष्ठव्यतिरिक्ताः प्राणा इति संशयः। सर्वे एवेति पूर्वः पक्षः; सर्वेषामविशेषेण प्राणशब्दनिर्देशात्, करणत्वाच्च। राद्धान्तस्तु—श्रेष्ठव्यतिरिक्ताः प्राणा इन्द्रियाणि, तेष्वेवेन्द्रियशब्दनिर्देशात्; "इन्द्रियाणि दशैकञ्च", "एकादशं मनश्चात्र" इति। एषामपि प्राणशब्दनिर्देशः प्राणाधीनवृत्तित्वेन। तथा च श्रुतिः, "त एतस्यैव सर्वे रूपमभवन्—शरीरमभवन्, तदधीनवृत्तयोऽभवन्नित्यर्थः। सूत्रार्थस्तु—श्रेष्ठादन्यत्र ये प्राणाः, त इन्द्रियाणि, तेष्वेव तद्व्यपदेशात्—इन्द्रियव्यपदेशात् ॥ १५ ॥

भेदश्रुतेर्वैलक्षण्याच्च २-४-१६

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति समनस्केन्द्रियेभ्यो भेदेन प्राणस्योत्पत्तिश्रुतेः, इन्द्रियेषूपरतेष्वपि प्राणवृत्तेर्वृत्तिवैलक्षण्याच्च ॥ १६ ॥

इति इन्द्रियाधिकरणम् ॥ ७ ॥

(८) संज्ञामूर्तिक्लृप्त्यधिकरणम्

संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् २-४-१७

किं प्रपञ्चव्यष्टिसृष्टिः जीवभूतचतुर्मुखात्, उत तच्छरीरकात् परमात्मन एवेति संशयः। केवलाच्चतुर्मुखादिति पूर्वः पक्षः; "अनेन

जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति व्यतिरेकश्रुतेः। जीवस्य परमात्मांशत्वेन व्याकरवाणीत्युत्तमपुरुषनिर्देशोऽपि कथञ्चिदुपपद्यते। राद्धान्तस्तु—"नामरूपे व्याकरवाणि तासां त्रिवृतंत्रिवृतमेकैकां करवाणि" इति त्रिवृत्करणं कुर्वत एव नामरूपव्याक्रियोपदेशात् परमात्मन एव नारूपव्याकरणरूपव्यष्टिसृष्टिः। त्रिवृत्करणं तु न चतुर्मुखेन कर्तुं शक्यम्, अण्डसृष्ट्युत्तरकालभावित्वाच्चतुर्मुखोत्पत्तेः, त्रिवृत्कृतैरेव तेजोबन्नैरण्डसृष्टिसंभवाच्च। "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" इतिप हि स्मर्यते। "नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना। नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः॥ समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः। महदादिविशेषान्ता ह्यण्डमुत्पादयन्ति ते" इति च। अतश्चतुर्मुखशरीरकात् परमात्मन एव व्यष्टिसृष्टिः। एवं सति व्याकरवाणीत्युत्तमपुरुषनिर्देशः समञ्जसः। "अनेन जीवेन" इति व्यतिरेकनिर्देशोऽपि जीवशरीरकेणात्मनेत्यन्वयात् समञ्जसः। जीवशब्दः तेजःप्रभृतिशब्दवत् जीवशरीरकब्रह्मवाचीति ह्युक्तम्। "अनेन जीवेनात्मना" इति सामानाधिकरण्यञ्च मुख्यम्; "अनुप्रविश्य नामरूपे व्याकरवाणि" इति समानकर्तृकत्वनिर्देशश्च। सूत्रार्थस्तु-संज्ञामूर्तिक्लृप्तिस्तु—तुशब्दश्शङ्काव्यावृत्त्यर्थः—नामरूपक्लृप्तिः परमात्मन एव। कुतः? त्रिवृत्कुर्वत उपदेशात् त्रिवृत्करणं कुर्वत एव नामरूपव्याकरणोपदेशात्। त्रिवृत्करणं तु परमात्मन एव कर्मेत्युक्तम्॥ १७॥

"अन्नमशितं त्रेधा विधीयते" इत्यादिना चतुर्मुखसृष्टवस्तुषु त्रिवृत्करणप्रकारो ह्युपदिश्यते। अतश्चतुर्मुखेन केवलेन तच्छक्यमित्याशङ्क्याह—

## मांसादि भौमं यथाशब्दमितरयोश्च २-४-१८

"तासां त्रिवृतंत्रिवृतमेकैकां करवाणि" इति निर्दिष्टं त्रिवृत्करणम्, "अन्नमशितं त्रेधा विधीयते" इत्यादिना नोपदिश्यते; "तस्य यः स्थविष्ठो धातुस्तत्पुरीषम्, यो मध्यमस्तन्मांसम्, योऽणिष्ठस्तन्मनः" इति मांसाद्यपि हि भौममेवोपदिश्यते। "अन्नमशितं त्रेधा" इति प्रक्रमात्, "अन्नमयं हि सोम्य मनः" इति वाक्यशेषाच्च। तेजोबन्नानां त्रिवृत्करणप्रकारे ह्युपदिश्यमाने मांसमनसोः पुरीषाद्भौमादणीयस्त्वेनाप्यत्वं तैजसत्वं च प्रसज्यते। तथेतरयोरपि अप्तेजःपर्याययोः, "आपः पीताः"

"तेजोऽशितम्" इति त्रयाणां भागानां यथाशब्दमाप्यत्वं तैजसत्वमेवोपदिश्यते। तत्रापि हि, "आपः पीताः", "तेजोऽशितम्" इत्युपक्रमः। वाक्यशेषश्च, "आपोमयः प्राणः तेजोमयी वाक्" इति। प्रागुक्तत्रिवृत्करणप्रकारे हि मूत्रप्राणयीः स्थविष्ठत्वाणीयस्त्वाभ्यां भौमत्वतैजसत्वप्रसक्तिः, "तेजोऽशितम्" इत्यत्रापि पूर्वयोर्भौमत्वाप्यत्वप्रसक्तिः। अतोऽत्र प्रागेव त्रिवृत्कृतस्यान्नादेस्त्रस्यैव त्रेधा परिणाम उपदिश्यते ॥ १८ ॥

प्रागेव त्रिवृत्कृतं चेत्—कथं केवलान्नादिशब्दैरुच्यते इत्यत्राह—

वैशेष्यात्तु तद्वादस्तद्वादः २-४-१९

वैशेष्यं—विशेषभावः। त्रिवृत्कृतेष्वेकैकस्मिंस्तत्रतत्रान्नाद्याधिक्यरूपविशेषभावादन्नादिवादः। द्विरुक्तिरध्यायपरिसमाप्तिद्योतनार्था ॥ १९ ॥

इति संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तदीपे

द्वितीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तश्चाध्यायः ॥ २ ॥

## अथ तृतीयोऽध्यायः

### प्रथमः पादः

#### (१) तदन्तरप्रतिपत्त्यधिकरणम्

तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ३-१-१

देही देहान्तरगमने देहकारणभूतैर्भूतसूक्ष्मैः संयुक्तो गच्छति, नेति संशयः। न संयुक्तो गच्छतीति पूर्वः पक्षः, देहारम्भाय तत्रतत्र भूतसूक्ष्माणां सुलभत्वात्। राद्धान्तस्तु—पञ्चाग्निविद्यायाम्, वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति प्रश्नप्रतिवचने आम्नायेते। देहारम्भिका आपस्त्रिवृत्करणेन भूतान्तरसंसृष्टाः द्युलोकपर्जन्यपृथिवीपुरुषरूपाग्निषु जीवेन सह प्रविष्टाः पञ्चम्यामाहुतौ योषिदग्निप्रवेशवेलायां पुरुषशब्दाभिलपनीया भवन्तीति प्रतीयते; पुरुषाकारतां भजन्त इत्यर्थः। अतो भूतसूक्ष्मैः सम्परिष्वक्त एव गच्छतीति। सूत्रार्थस्तु—तदन्तरप्रतिपत्तौ—"संज्ञामूर्तिक्लृप्तिः" इत्यत्र मूर्तिशब्देन देहः प्रस्तुतः तच्छब्देन

परामृश्यते। देहान्तरप्रतिपत्तौ—रंहति सम्परिष्वक्तः—जीवो भूतसूक्ष्मैः सम्परिष्वक्तो गच्छति। कुतः? प्रश्ननिरूपणाभ्यां तथाऽवगम्यत इत्यर्थः ॥ १ ॥

कथमविशेषेणाप्छब्देन सर्वेषामभिधानमित्याशङ्क्याह—

## त्र्यात्मकत्वात्तु भूयस्त्वात् ३-१-२

तुशब्दश्शङ्कानिवृत्त्यर्थः। अपां त्रिवृत्करणेन त्र्यात्मकत्वादपि इति भूतान्तरसंसृष्टा आपोऽभिधीयन्ते। अपां भूयस्त्वात् आधिक्यात् अप्छब्देनाभिधानम् ॥ २ ॥

## प्राणगतेश्च ३-१-३

इतश्च भूतसूक्ष्मैस्संयुक्तो याति। "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति प्राणानामिन्द्रियाणां जीवेन सह गमनश्रुतेः इन्द्रियाणां देहाश्रयत्वेन देहोऽपि भूतसूक्ष्मरूपेण गच्छतीति गम्यते। स्मर्यते च "मनष्षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति' इत्यादिना ॥ ३ ॥

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ३-१-४

"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्" इति मरणवेलायां वागादीनामग्न्यादिष्वप्ययश्रुतेर्जीवेन सह गमनश्रुतिरन्यथा नेयेति चेत्; तन्न, भाक्तत्वात् तत्र वागादिशब्दानाम्। वागाद्यभिमानिदेवतासु हि तत्र वागादयः शब्दाः। ओषधीर्लोमानि वनस्पतीन् केशाः" इत्यनपियद्भिर्लोमादिभिस्सहपाठात् ॥ ४ ॥

## प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ३-१-५

प्रथमे—द्युलोकाग्निहोमे अपामश्रवणात् आपो भूतान्तरसंसृष्टा गच्छन्तीति वक्तुं न शक्यते; तत्र हि "तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति" इति श्रद्धैव होम्यत्वेन श्रूयत इति चेत्—न—ताः=आप एव हि श्रद्धाशब्देनोच्यन्ते, प्रतिवचनस्य प्रश्नानुगुण्योपपत्तेः। "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इत्यपां पुरुषवचस्त्वप्रकारे

पृष्टे स एव हि प्रतिवक्तव्यः। अतः श्रद्धाशब्देन ता आप एवोच्यन्ते। श्रद्धा वा आपः" इति हि श्रूयते ॥ ५ ॥

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ३-१-६

"आपः पुरुषवचसो भवन्ति", "श्रद्धां जुह्वति" इति द्युलोकादिष्वाप एव हि गच्छन्तीति श्रूयते; न तत्परिष्वक्तो जीवः। अतः प्रश्न प्रतिवचनयोर्जीवस्याश्रुतत्वात् तत्संयुक्तो जीवो गच्छतीति न शक्यते वक्तुमिति चेत्—तन्न, इष्टादिकारिणां प्रतीतेः—उत्तरत्र, "अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति" इत्यादौ इष्टादिकारिणां जीवानां द्युलोकादिगमनपुनरावृत्तिप्रकारवचने द्युलोकाग्निसंबन्ध (द्ध?) स्याप्छब्दवाच्यस्य सोममापन्नस्य प्रत्यभिज्ञानादत्र आप इति तत्संयुक्तो जीव एवोच्यते ॥ ६ ॥

"आकाशाच्चन्द्रमसमेष सोमो राजा तत् देवानामन्नम्। तंदेवा भक्षयन्ति" इति धूमादिना गतस्य देवैर्भक्ष्यमाणत्वश्रवणात्, जीवस्यानदनीयत्वाच्च न जीवस्तत्रोक्त इत्याशङ्क्याह—

भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति ३-१-७

वाशब्दशङ्काव्यावृत्त्यर्थः। "तं देवा भक्षयन्ति" इति भक्ष्यत्ववचनं भाक्तम्—केवलेष्टादिकारिणामनात्मवित्त्वात् देवोपकरणत्वाभिप्रायम्। अनात्मविदः केवलेन्द्रादिदेवयाजिनो हि देवान् प्राप्य तदुपकरणं भवन्ति। तथा हि दर्शयति श्रुतिः, "यथा पशुरेवं स देवानाम्" इति। अतो भूतसूक्ष्मैस्सम्परिष्वक्तो जीवो रंहति ॥ ७ ॥

इति तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

(२) कृतात्ययाधिकरणम्

कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ३-१-८

धूमादिना गतो निवर्तमानो जीवः सानुशयो निवर्तते, उत नेति संशयः। नेति पूर्वः पक्षः। अनुशयो हि भुक्तशिष्टं कर्म। "यावत्सम्पातमुषित्वा", "प्राप्यान्तं कर्मणः" इत्यादिश्रुतिभ्यः कृत्स्नस्य कर्मणोऽनुभूतताप्रतीतेः नानुशयवान्निवर्तते। राद्धान्तस्तु—"तद्य इह रमणीय-

चरणाः, अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्रह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा । अथ य इह कपूयचरणाः अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा" इति रमणीयचरणा ब्रह्मणादियोनिं, कपूयचरणाः=कुत्सितकर्माणः श्वसूकारादियोनि प्रतिपद्यन्त इति श्रुतेः, "प्राप्यान्तं कर्मणः" इत्यादिश्रुतिः फलप्रदानप्रवृत्तकर्मविषयेति सानुशयो निवर्तते। सूत्रार्थस्तु—कृतात्यये कृतस्य पूर्वकर्मणोऽत्यये, अनुशयवान् भुक्तशिष्टकर्मवान्निवर्तते; कुतः? दृष्टस्मृतिभ्याम्—श्रुतिस्मृतिभ्यामवगम्यते; । "तद्य इह रमणीयचरणाः" इत्यादिः श्रुतिः; "ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपम्" इत्यादिका स्मृतिः। यथेतमनेवं च—आरोहणप्रकारेण प्रकारान्तरेण च निवर्तन्ते । चन्द्रमसः स्थानादाकाशमित्यारोहणक्रमेणावरोहन्ति, वायुधूमाभ्रादिना प्रकारान्तरेण च ॥ ८ ॥

## चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ३-१-९

रमणीयरणाः" इति रमणीयाचारस्य स्मृतिविहितस्य ब्रह्मण्यादिप्राप्तिसाधनत्वश्रवणात् न सकर्मा प्रत्यवरोहतीति चेत्-तन्न-चरणश्रुतिः कर्मोपलक्षणार्थेति कार्ष्णाजिनिराचार्यो मन्यते, पुण्यस्यैव कर्मणः सुखप्राप्तिसाधनत्वात् ॥ ९ ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ३-१-१०

स्मृतिविहितस्याचारस्याकिञ्चित्करत्वेनानर्थक्यं प्रसज्यत इति चेत्—न, तदपेक्षत्वात्—आचारापेक्षत्वात् सुखसाधनभूतपुण्यकर्मणः । "सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु" इति सर्वं हि पुण्यकर्म आचारापेक्षमेवेति कार्ष्णाजिनेर्मतम् ॥ १० ॥

## सुकृतदुष्कृते एवेति तु बादरिः ३-१-११

तुशब्दः पूर्वमतव्यावृत्त्यर्थः। "रमणीयचरणाः कपूयचरणाः" इति चरणशब्देन सुकृतदुष्कृते एव कर्मणी प्रतिपाद्येते; 'पुण्यं कर्माचरति, इति चरतेः कर्मणि प्रसिद्धेः न लक्षणा न्याय्येति बादरिर्मन्यते । इदमेव सूत्रकाराभिप्रेतम्, तुशब्देन पूर्वमताद्व्यावृत्तेः। सुकृतदुष्कृते एवेति व्यावर्तनात्। 'आनर्थक्यमिति चेन्न तदपेक्षत्वात्' इति तु स्वीकृतम् ॥ ११ ॥

इति कृतात्ययाधिकरणम् ॥ २ ॥

---

## (३) अनिष्टादिकार्यधिकरणम्

### अनिष्टादिकारिणामपि च श्रुतम् ३-१-१२

विहिताकरण (अविहितकर्माणः) प्रतिषिद्धसेवारताः पापकर्माणोऽपि धूमादिना चन्द्रमसं गत्वा निवर्तन्ते, उत नेति संशयः। गत्वैव निवर्तन्त इति पूर्वः पक्षः, "ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इति सर्वेषामविशेषेण चन्द्रगमनश्रुतेः। राद्धान्तस्तु—"अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसंभवन्ति" इति धूमादिना चन्द्रगमनस्य पुण्यकर्मफलत्वश्रवणात् तद्रहिताः पापकर्माणो न गच्छन्ति—इति। "ये वै के च" इति वचनं सर्वेषां पुण्यकर्मणां चन्द्रगमनविषयम्। सूत्रार्थस्तु—अनिष्टादिकारिणामपि च श्रुतम्—अनिष्टादिकारिणामपि—इष्टापूर्तादि अकुर्वतां पापिनामपि चन्द्रगमनमस्ति, "ये वै के चास्माल्लोकात् प्रयन्ति" इति यतोऽविशेषेण श्रुतम् ॥ १२ ॥

इयांस्तु विशेषः—

### संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ३-१-१३

तुशब्दः शंकां व्यावर्तयति। इतरेषाम्—अनिष्टादिकारिणां चन्द्रारोहावरोहौ संयमने=यमशासने यातनामनुभूयैव। (पापफलमनुभूय इतरेषां पापिनां चन्द्रारोहावरोहौ।) कुतः? तद्गतिदर्शनात्—पापिनां यमसदनगतिदर्शनात्, "वैवस्वतं सङ्गमनं जनानाम्" इत्यादौ ॥ १३ ॥

### स्मरन्ति च ३-१-१४

"सर्वे चेते वशं यान्ति यमस्य भगवन् किल" इति पराशरादयः स्मरन्ति च ॥ १४ ॥

### अपि सप्त ३-१-१५

पापकर्मणां गन्तव्यत्वेन सप्तापि रौरवादिनरकान् स्मरन्ति। (सप्तापि रौरवादयो लोकाः पापिनां गन्तव्यत्वेन स्मर्यन्ते) ॥ १५ ॥

ननु सप्तसु लोकेषु गच्छतां कथं यमसदनप्राप्तिः। तत्राह—

### तत्रापि तद्व्यापारादविरोधः ३-१-१६

तेष्वपि सप्तसु रौरवादिलोकेषु यमव्यापारात्—यमाज्ञयैव गमनात् यमवश्यताया अविरोधः। अतः पापिनामपि यमयातना अनुभूय

चन्द्रारोहावरोहौ अवर्जनीयौ। (अतोऽनिष्टादिकारिणामपि यमलोकं प्राप्य यातनाश्चानुभूय पश्चात् चन्द्रारोहावरोहौ भवतः।) ॥ १६ ॥

इति प्राप्त उच्यते—

## विद्याकर्मणोरिति तु प्रकृतत्वात् ३-१-१७

तुशब्दः पक्षव्यावृत्त्यर्थः। न च पापकर्मणामर्चिरादिना ब्रह्मगमनं धूमादिना चन्द्रगमनं च संभवति, तयोर्विद्याकर्मणोः फलत्वात्। कथमिदमवगम्यते तत्फलत्वम्? इति प्रकृतत्वात्-इत्थं प्रकृतत्वात्। विद्याकर्मणी हि प्रकृत्य तत्फलत्वेन गतिद्वयं प्रतिपाद्यते, "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति" इति, "अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसंभवन्ति" इति च। पापिनां विद्यारहितत्वेन ब्रह्मगमनाभाववत् पुण्यकर्मरहितत्वेन चन्द्रगमनमपि न संभवतीत्यर्थः ॥ १७ ॥

'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति पञ्चमाहुत्या देहारम्भश्रवणात् तस्याश्चन्द्रगमनपूर्वकत्वेन पापिनामपि देहारम्भाय चन्द्रगमनमवश्यम्भावीत्याशङ्क्याह—(त्यत आह—)

## न तृतीये तथोपलब्धेः ३-१-१८

केवलपापकर्मणः तृतीयस्थानम्। न तृतीये स्थाने देहारम्भाय पञ्चमाहुत्यपेक्षाऽस्ति; तथोपलब्धेः—'वेत्थ यथा केनासौ लोको न सम्पूर्यते' इति द्युलोकस्याप्राप्ता क इति प्रश्नस्य प्रतिवचने, 'अथैतयोः पथोर्न कतरेण चन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्; तेनासौ लोको न संपूर्यते' इति तृतीयस्य स्थानस्य द्युलोकाप्राप्तिश्रवणात् तस्य देहारम्भे पञ्चमाहुत्यनपेक्षत्वं ह्युपलभ्यते ॥ १८ ॥

## स्मर्यतेऽपि च लोके ३-१-१९

पुण्यकर्मणामपि केषाञ्चिद् द्रौपद्यादीनां देहारम्भे पञ्चमाहुत्यनपेक्षत्वं शिष्टलोकेऽपि च स्मर्यते ॥ १९ ॥

## दर्शनाच्च ३-१-२०

श्रुतावपि दृश्यते केषाञ्चिद्देहारम्भे पञ्चमाहुत्यनपेक्षत्वम्—'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जम्' इति स्वेदजोद्भिज्जयोर्देहारम्भे पञ्चमाहुत्यनपेक्षत्वम् ॥ २० ॥

'आण्डजं जीवजमुद्भिज्जम्' इत्यत्र स्वेदजस्य ग्रहणं न दृश्यत इत्याशङ्क्याह—

## तृतीयशब्दावरोधः संशोकजस्य ३-१-२१

"आण्डजं जीवजमुद्भिज्जम्" इत्यत्र तृतीयेनोद्भिज्जशब्देन संशोकजस्य—स्वेदजस्य अवरोधः—संग्रह इत्यर्थः। अतः केवलपापकर्मणां चन्द्रारोहावरोहौ न संभवतः ॥ २१ ॥

इति अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

### (४) तत्स्वाभाव्यापत्त्यधिकरणम्

## तत्स्वाभाव्यापत्तिरुपपत्तेः ३-१-२२

धूमादिना चन्द्रमसं प्राप्तस्य प्रत्यवरोहप्रकार आम्नायते, "यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति" इति। अत्राकाशादिभावः किं देवमनुष्यादिभाववत् आकाशादिशरीरत्वम्, उत तत्सादृश्यापत्तिरिति संशयः। आकाशादिशरीरत्वमिति पूर्वः पक्षः, श्रद्धावस्थस्य सोमराजभाववत्। तत्र हि तच्छरीरत्वमेवोच्यते। राद्धान्तस्तु—आकाशादिप्राप्तौ सुखदुःखानुभवाभावात् तत्सादृश्यापत्तिरेव। सुखदुःखानुभवाय हि सोमादिशरीरत्वम्। सूत्रार्थस्तु—तत्स्वाभाव्यापत्तिः-आकाशादिसादृश्यापत्तिः, उपपत्तेः-सुखदुःखानुभवाभावोपपत्तेः ॥ २२ ॥

इति तत्स्वाभाव्यापत्त्यधिकरणम्

## (५) नातिचिराधिकरणम्

### नातिचिरेण विशेषात् ३-१-२३

आकाशवायुधूमाभ्रमेघवर्षप्राप्तौ किं तत्रतत्र नातिचिरं तिष्ठति, उतानियम इति संशयः। अनियम इति पूर्वः पक्षः, नातिचिरेणेति विशेषवचनाभावात्। राद्धान्तस्तु—उत्तरत्र व्रीह्यादिभावे, "अतो वै खलु दुर्निष्प्रपतरम्" इति विशिष्य चिरेण गमनवचनं ततः प्राचीनेष्वचिरगमनं द्योतयतीत्याकाशादि यावद्व्रीह्यादिभावप्राप्ति नातिचिरं तिष्ठति—इति। सूत्रमपि व्याख्यातम् ॥ २३ ॥

इति नातिचिराधिकरणम् ॥ ५ ॥

---

## (६) अन्याधिष्ठिताधिकरणम्

### अन्याधिष्ठिते पूर्ववदभिलापात् ३-१-२४

अवरोहन्तो जीवा व्रीह्यादिभावेन जायन्त इति श्रूयते, "मेघो भूत्वा प्रवर्षति। त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते" इति। ते किं व्रीह्यादिशरीरा जायन्ते, उतान्यैः क्षेत्रज्ञैर्व्रीह्यादिशरीरैरधिष्ठितान् व्रीह्यादीन् आश्लिष्यन्तीति संशयः। "जायन्ते" इति वचनाद् व्रीह्यादिशरीर (रे) भोक्तारो जायन्त एवेति पूर्वः पक्षः। राद्धान्तस्तु–व्रीह्यादिजन्महेतुभूतकर्मविशेषाश्रवणात् व्रीह्यादिसंश्लेषमात्रमेव। "जायन्ते" इतिजन्मवचनमौपचारिकम्। ब्राह्मणादिशरीरभावे हि "रमणीयचरणाः...कपूयचरणाः" इति जन्महेतुभूतं पुण्यपापरूपं कर्म श्रूयते। सूत्रार्थस्तु—अन्याधिष्ठिते—अन्यक्षेत्रज्ञाधिष्ठिते व्रीह्यादौ, संश्लेषमात्रम्, कुतः? पूर्ववदभिलापात्—आकाशादिभाववत् केवलव्रीह्यादिभावाभिलापात्; जन्महेतुभूतकर्मानभिलापादित्यर्थः ॥ २४ ॥

### अशुद्धमिति चेन्न शब्दात् ३-१-२५

यद्यपि व्रीह्यादिभावेन जायन्त इत्यत्र जन्महेतुभूतं कर्म न श्रुतम्—तथापि पूर्वश्रुतमिष्टादिकर्म अग्नीषोमीयादि अहिंसागर्भत्वेनाशुद्धम् = हिंसात्वेनाशुचि व्रीह्यादिजन्मनोऽपि हेतुर्भवतीति चेत्—न, अहिंसात्व-

शब्दात्। पशोर्हि संज्ञपनस्य स्वर्गावाप्तिसाधनभाववादिशब्दः श्रूयते—"हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेति", "न वा उ एतन्म्रियसे न रिष्यसि" इत्यादिः ॥ २५ ॥

इतश्च व्रीह्यादिसंश्लेषमात्रम्—

## रेतस्सिग्योगोऽथ ३-१-२६

व्रीह्यादिभावानन्तरं रेतस्सिग्योगः श्रूयते, "यो यो ह्यन्नमत्ति यो यो रेतस्सिञ्चति तद् भूय एव भवति" इति। अत्र हि पुरुषसंश्लेषमात्रमेव श्रुतम्; एवमेव व्रीह्यादिभावेऽपीत्यर्थः ॥ २६ ॥

## योनेः शरीरम् ३-१-२७

योनिप्राप्तेः पश्चादेवावरोहतो जीवस्य शरीरप्राप्तिः, तत्रैव सुखदुःखोपभोगात्। ततः प्राक् आकाशादिषु तत्तत्संश्लेमात्रमेवेत्यभिप्रायः ॥ २७ ॥

इति अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे

तृतीयस्याध्यायस्य प्रथमः पादः ॥ १ ॥

अथ तृतीयेऽध्याये द्वितीयः पादः

(१) संध्याधिकरणम्

## सन्ध्ये सृष्टिराह हि ३-२-१

स्वप्नमधिकृत्य श्रूयते—"न तत्र रथा न रथयोगा न पन्थानो भवन्ति, अथ रथान् रथयोगान् पथस्सृजते" इत्यारभ्य, "अथ वेशान्ताः पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता" इति। किं स्वाप्नानामप्यर्थानां स्रष्टा जीव एव, उत परमात्मेति संशयः। स्वप्नद्रशो जीवस्य सन्निधानात्, "स हि कर्ता" इति स एव परामृश्यते; जीवस्यापि सत्यसङ्कल्पत्वं प्रजापतिवाक्योदितमिति स एव स्रष्टेति पूर्वः पक्षः। राद्धा-

न्तस्तु—जीवस्य सत्यसङ्कल्पत्वं स्वाभाविकमपि संसारदशायां परमपुरुषसङ्कल्पात् तिरोहितमिति न जीवस्य सत्यसङ्कल्पमात्रेण स्रष्टृत्वमुपपद्यते। अतः परमपुरुष एव सकलेतरपुरुषानुभवाविषयान् तत्तत्पुरुषमात्रेणानुभाव्यान् तत्तत्कालावसानान् स्वाप्नान् अर्थान् सृजति। सूत्रार्थस्तु—सन्ध्ये—स्वप्ने श्रूयमाणा रथादिसृष्टिः स्वप्नदशा जीवेन कृताः। कुतः? आह हि। "स हि कर्ता" इति तस्यैव परामर्शादित्यर्थः॥ १॥

## निर्मातारं चैके पुत्रादयश्च ३-२-२

एनमेव जीवं निर्मातारं स्वाप्नानामर्थानाम् एके शाखिनोऽधीयते, "य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः" इति। अत्र कामशब्दनिर्दिष्टाः काम्यमानतया पुत्रादय एव। चशब्दोऽवधारणे। अत्र हि "सर्वान् कामान्" इति कामशब्देन प्रस्तुतान्, "शतायुषः पुत्रपौत्रान् वृणीष्व" इति विविनक्ति॥ २॥

## मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात् ३-२-३

तुशब्दात् पक्षो विपरिवर्तते। न जीवेन सृष्टं स्वाप्नमर्थजातम्; अपित्वीश्वर (अपितु परमेश्वर) मायामात्रं—सकलेतरपुरुषानुभवाविषयं तदेकानुभाव्यं तत्कालावसानमाश्चर्यरूपमर्थजातमीश्वरः सृजतीत्यर्थः। जीवस्य सतः सत्यसङ्कल्पत्वादेः कृत्स्नस्य संसारदशायामनभिव्यक्तस्वरूपत्वात् तस्य हि सङ्कल्पमात्रेण स्रष्टृत्वं नोपपद्यते। "कामंकामं पुरुषो निर्मिमाणः" इति च परमपुरुषमेव निर्मातारमाह—"य एषु सुप्तेषु जागर्ति", "तस्मिंल्लोकाः श्रितास्सर्वे तदु नात्येति कश्चन" इत्युपक्रमोपसंहारयोः परमपुरुषासाधरणधर्मप्रतीतेः। "स हि कर्ता" इति च तेनैकार्थ्यात् परमपुरुषमेवाह॥ ३॥

स्वाभाविकं चेज्जीवस्य सत्यसङ्कल्पत्वादिकम्, कथं नाभिव्यज्यत इत्याशङ्क्याह—(इत्यत्राह—)

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ३-२-४

तुशब्दः शङ्कानिवृत्त्यर्थः। परमपुरुषाभिध्यानादस्य स्वाभाविकं रूपमनादिकर्मप्रवाहेण कृतापराधतया तिरोहितम्; ततो ह्यस्य बन्धविपर्ययौ—ततः परमपुरुषसङ्कल्पादेव हि, अस्य—जीवस्य, बन्धविपर्ययौ—संसार-

मोक्षौ श्रूयेते—"को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति", "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादौ ॥ ४ ॥

तिरोधानप्रकारमाह—

देहयोगाद्वा सोऽपि ३-२-५

सोऽपि तिरो [धान] भावः देहयोगाद्वा भवति। वाशब्दो विकल्पार्थः। व्यवस्थितश्च विकल्पः। देवमनुष्यादिदेहाकारपरिणताचिद्योगात् सृष्टिवेलायाम्, नामरूपविभागानर्हसूक्ष्मदशापन्नाचिद्योगेन प्रलयकाले ॥ ५ ॥

सूचकश्च हि श्रुतेराचक्षते च तद्विदः ३-२-६

इतश्च स्वाप्ना रथादयो न जीवसङ्कल्पकृताः; यतः स्वप्नः शुभाशुभयोः सूचक इति श्रुतेरवगम्यते, "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने", "अथ स्वप्ने पुरुषं कृष्णं कृष्णदन्तम्" इत्यादिषु। स्वप्नाध्यायविदश्चाचक्षते। जीवसङ्कल्पकृतत्वे हि सूचकत्वं न संभवति; स्वसङ्कल्पकृतत्वे हि शुभानामेव सूचकान् अर्थान् सृष्ट्वा तानेव पश्येत्। अतः स्वाप्नानामर्थानां परमपुरुष एव स्रष्टा ॥ ६ ॥

इति सन्ध्याधिकरणम् ॥ १ ॥

(२) तदभावाधिकरणम्

तदभावो नाडीषु तच्छ्रुतेरात्मनि च ३-२-७

नाड्यः पुरीतत् ब्रह्म च सुषुप्तिस्थानत्वेन श्रूयन्ते; किमेषां विकल्पः, उत समुच्चय इति संशयः। विकल्प इति पूर्वः पक्षः—"आसु तदा नाडीषु सृप्तो भवति", "ताभिः प्रत्यवसृप्य पुरीतति शेते, "सता सोम्य तदा सम्पन्नो भवति" इति त्रयाणां नैरपेक्ष्यप्रतीतेः। राद्धान्तस्तु—प्रासादखट्वापर्यङ्कवत् कार्यभेदेन समुच्चये संभवति पाक्षिक-

बाधगर्भविकल्पो न युक्त इति समुच्चयो न्याय्यः। तत्र पर्यङ्कस्थानीयं ब्रह्म, यतः पर्यङ्कवत् साक्षाद्ब्रह्म सुषुप्तिस्थानम्। सूत्रार्थस्तु—तदभावः स्वप्नाभावः; सुषुप्तिरित्यर्थः। सुषुप्तिः नाडीष्वात्मनि च; चकारात् पुरीतति च; तच्छ्रुतेः—त्रयाणां सुषुप्तिस्थानत्वश्रुतेः। उक्तेन न्यायेन समुच्चयो न्याय्य इत्यभिप्रायः ॥ ७ ॥

## अतः प्रबोधोऽस्मात् ३-२-८

अस्मात्—ब्रह्मणः प्रबोधश्रुतिरत एवोपपद्यते, "सत आगम्य न विदुः सत आगच्छामहे" इति ॥ ८ ॥

इति तदभावाधिकरणम् ॥ १ ॥

### (३) कर्मानुस्मृतिशब्दविध्यधिकरणम्

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ३-२-९

किं सुषुप्त एव प्रबोधकाले उत्तिष्ठति, स एव वा अन्यो वेत्यनियम इति संशयः। सुषुप्तस्य सर्वोपाधिविनिर्मुक्तस्य ब्रह्मणि संपन्नस्य मुक्तादविलक्षणत्वेन प्राचीनशरीरसम्बन्धाभावात् स एवेति नियमो न संभवतीति पूर्वः पक्षः। सुषुप्तस्य ब्रह्मज्ञानाभावेन पूर्वकृतस्य कर्मणः तेनैवोपभोक्तव्यत्वात्, सोऽहमिति प्रत्यभिज्ञानात्, "त इह व्याघ्रो वा सिंहो वा" इत्यारभ्य "यद्यद्भवन्ति तदाभवन्ति" इति शब्दात्, मोक्षसाधनविध्यानर्थक्याच्च स एवोत्तिष्ठतीति राद्धान्तः। न चासौ शरीरेन्द्रियसंबन्धविनिर्मुक्तः, अपि तु करणकलेबरप्रवर्तनायासादाश्वासाय ब्रह्मण्यपीतः पुनराश्वस्तः प्रवर्तनायोत्तिष्ठति। सूत्रमपि व्याख्यातम् ॥ ९ ॥

इति कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥

## (४) मुग्धाधिकरणम्

### मुग्धेऽर्धसम्पत्तिः परिशेषात् ३-२-१०

किं मूर्छा मरणादर्थान्तरम्, उत मरणमेवेति संशयः। सर्वेन्द्रियप्राणव्यापारोपरतेः मरणमेवेति पूर्वः पक्षः। आकारवैरूप्येण सूक्ष्मप्राणास्तित्वावगतेः मरणायार्ध (णेऽर्ध) सम्पत्तिरिति सिद्धान्तः। सूत्रार्थस्तु–मुग्धे मूर्च्छिते पुरुषे याऽवस्था, सा मरणायार्धसम्पत्तिः। कुतः? परिशेषात्। प्राणादिसर्वव्यापारोपरतेः न जागराद्यवस्था। न च गतप्राणा; आकारवैलक्षण्येन सूक्ष्मप्राणास्तित्वावगतेः मूर्च्छितस्यैव कस्यचित् पुनर्जीवनदर्शनाच्च न मरणमिति परिशेषान्मरणायार्धसम्पत्तिरित्यवगम्यते ॥ १० ॥

इति मुग्धाधिकरणम् ॥ ४ ॥

## (५) उभयलिङ्गाधिकरणम्

### न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ३-२-११

किं जीवस्येव तदन्तर्यामिणः परस्य ब्रह्मणोऽपि जागरादिस्थानप्रयुक्तदोषाः संभवन्ति, उत नेति संशयः। "यः पृथिव्यां तिष्ठन्", "य आत्मनि तिष्ठन्", "यश्चक्षुषि तिष्ठन्", "यो रेतसि तिष्ठन्" इत्यादिना जीवस्येव सर्वावस्थासु अवस्थितिवचनात् छन्दतोऽपि पूयशोणितादिमज्जनमपुरुषार्थ एवेति सर्वे दोषाः भवन्तीति पूर्वः पक्षः। राद्धान्तस्तु— "अपहतपाप्मा विजरः", "निरवद्यं निरञ्जनम्", "सत्यकामः सत्यसङ्कल्पः", "यस्सर्वज्ञस्सर्ववित्", "यो मामजमनादिं च वेत्ति लोकमहेश्वरम्", "परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे" इत्यादिश्रुतिस्मृतिभ्यो निरस्तनिखिलदोषगन्धतासार्वज्ञ्यसत्यसङ्कल्पत्वाद्युभयलक्षणस्वरूपावगतेः परस्य ब्रह्मणः सर्वत्रान्तर्यामितयाऽवस्थितस्यापि न दोषगन्धः संभवति; अपि तु सर्वनियमनरूपलीलारस एव ॥

सूत्रार्थस्तु—न स्थानतोऽपि परस्य—पृथिव्यात्मादिष्वन्तर्यामितयाऽवस्थितस्यापि परस्य ब्रह्मणः, जीवस्य तत्रतत्रावस्थितस्य ये दोषाः उक्ताः, ते न संभवन्ति; कुतः? उभयलिङ्गं सर्वत्र हि। हिर्हेतौ, यतः सर्वत्र श्रुतिस्मृतिषु निरस्तनिखिलदोषत्वसमस्तकल्याणगुणात्मकत्वरूपोभयलिङ्गम्—उभयलक्षणं ब्रह्मावगतम् ॥ ११ ॥

## भेदादिति चेन्न प्रत्येकमतद्वचनात् ३-२-१२

यथा जीवस्य स्वतोऽपहतपाप्मत्वादिगुणकस्यापि देवादिशरीर-संबन्धितयाऽवस्थाभेदादुक्तदोषसंबन्धित्वम्—एवं परस्यापि, "यस्य पृथिवी शरीरम्" इति शरीरसंबन्धित्वावस्थाभेदात् ते दोषाः स्युरिति चेत्—न, प्रत्येकं-प्रतिपर्यायम्, अतद्वचनात्-दोषासंबन्धित्ववचनात्। "यस्य पृथिवी शरीरम्" इत्यादिषु, "एष त आत्माऽन्तर्याम्यमृतः" इत्यन्तर्यामिणो हि निर्दोषत्वमुच्यते। जीवस्य तु पराभिध्यानात् तत्तत्स्व-रूपं तिरोहितमित्युक्तम्। अतः शरीरसम्बन्धित्वेऽपि परस्यैते न दोषाः ॥ १२ ॥

## अपि चैवमेके ३-२-१३

अपि च यदिदं जीवपरयोरेकस्मिन् शरीरे शरीरित्वेनावस्थित-योर्दोषसंबन्धित्वं तद्विपरीतत्वं चोक्तम्, एवमे (एतदे?)के शाखिनः स्वशब्देनाधीयते -"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिष-स्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति ॥

मनुष्यादिशरीरेषु शरीरित्वमेव जीवस्य नामरूपभाक्त्वेन कर्म-वश्यताहेतुः। तत् परस्याप्यविशिष्टं चेत्, कथं परस्य ब्रह्मणोऽकर्मवश्य-त्वेन कर्मफलानशनमुच्यते इत्यत आह—

## अरूपवदेव हि तत्प्रधानत्वात् ३-२-१४

मनुष्यादिशरीरेषु शरीरित्वेऽप्यरूपवदेव हि तत् परं ब्रह्म; कुतः? प्रधानत्वात् निर्वाहकत्वात्; जीवस्य नामरूपभाक्त्वेन कर्मफलाशनं निर्वोढुं परस्य तत्तच्छरीरे शरीरित्वेनावस्थानम्। यथाह—"यस्य पृथिवी शरी-रम्", "यस्याऽऽत्मा शरीरम्...आत्मानमन्तरो यमयति" "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा", "आकाशो हवै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति। अत उभयलिङ्गमेव परं ब्रह्म ॥ १४ ॥

"सत्यं ज्ञानमनन्तं ब्रह्म" इति प्रकाशैकस्वरूपता ब्रह्मण उच्यते, कथमुभयलिङ्गत्वमित्यत आह—

## प्रकाशवच्चावैयर्थ्यात् ३-२-१५

यथा "सत्यं ज्ञानम्" इति वाक्यावैयर्थ्यात् प्रकाशो ब्रह्मणः स्वरूप-मित्यवगम्यते, तथा, "यः सर्वज्ञः सर्ववित्" "पराऽस्य शक्तिर्विविधैव

श्रूयते" इत्यादिवाक्यावैयर्थ्यात् कल्याणगुणाकरत्वं च ब्रह्मणस्स्वरूपमित्यवगम्यते इत्युभयलिङ्गमेव ॥ १५ ॥

## आह च तन्मात्रम् ३-२-१६

"सत्यं ज्ञानम्" इति वाक्यं ब्रह्मणो ज्ञानं स्वरूपमित्येतावन्मात्रमाह; न पुनः कल्याणगुणाकरत्वं निषेधति ॥ १६ ॥

## दर्शयति चाथो अपि स्मर्यते ३-२-१७

दर्शयति च वेदान्तवाक्यगणो निरस्तनिखिलदोषत्वं कल्याणगुणाकरत्वं च, "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्", "तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतम्" इत्यादिकः। स्मर्यते च, "यो मामजमनादिं च वेत्ति लोकमहेश्वरम्", "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा। मत्तः परतरं नान्यत्" इत्यादिषु ॥ १७ ॥

## अत एव चोपमा सूर्यकादिवत् ३-२-१८

यतो ब्रह्मणो निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वेनोभयलिङ्गत्वात् पृथिव्यादिस्थानतोऽपि न तत्तत्प्रयुक्तदोषगन्धसंभवः; अत एव शास्त्रेषु च जलसूर्यकाद्युपमा क्रियते, "आकाशमेकं हि यथा घटादिषु पृथक् भवेत्। तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्" इत्यादिषु ॥ १८ ॥

## अम्बुवदग्रहणात्तु न तथात्वम् ३-२-१९

तुशब्दश्चोद्यं द्योतयति। अम्बुनीवाग्रहणात्। यथाऽम्बुनि सूर्यः तत्रानवस्थित एव भ्रान्त्या तत्र स्थित इव गृह्यते, न तथा परमात्मा पृथिव्यादौ गृह्यते। "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः" इति परमार्थतःस्थितो गृह्यते; अतो न तथात्वम्—न सूर्यस्येव तत्प्रयुक्तदोषगन्धाभावः परमात्मनः, परमार्थतस्स्थितत्वात् ॥ १९ ॥

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ३-२-२०

पृथिव्यादिषु विषमेषु स्थानेषु स्थितस्यापि परमात्मनः तदन्तर्भावात्—तत्रावस्थानतः तत्प्रयुक्तवृद्धिह्रासभाक्त्वम् "जलाधारेष्विवांशुमान्" इति दृष्टान्तेन निवर्त्यते। कुतोऽवगम्यते एतावन्मात्रमिति;

उभयसामञ्जस्यादेवम् — उभयदृष्टान्तोपादानसामञ्जस्यादेवमवगम्यते। "आकाशमेकं हि यथा घटादिषु पृथक् भवेत्" इति घटकरकादिषु विषमेष्ववस्थितमाकाशम्, "जलाधारेष्विवांशुमान" इति चांशुमन्तं परमार्थतोऽनवस्थितं चोभयं दृष्टान्ततयोपादाय, "तथाऽऽत्मैको ह्यनेकस्थः" इति निगमनात् तत्तत्स्थानप्रयुक्तवृद्धिह्रासभाक्त्वनिवर्तनमात्रं विवक्षितमित्यवगम्यते। अन्यत्रापि दृष्टान्तदार्ष्टान्तिकयोस्सर्वसाम्याभावेऽपि, "सिंह इव माणवकः" इत्यादिषु दृष्टान्तोपादानदर्शनाच्चैवमवगम्यते ॥ २० ॥

"अथात आदेशो नेति नेति" इत्यादिना पूर्वप्रकृतस्य मूर्तामूर्तप्रपञ्चस्य ब्रह्मणो रूपत्वप्रतिषेधान्निष्प्रपञ्चं सन्मात्रमेव ब्रह्म; न पुनः उक्तस्वरूपमुभयलिङ्गमित्याशङ्क्याह—

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ३-२-२१

हीति हेतौ। "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तञ्च" इत्यादिना स्थूलस्य सूक्ष्मस्य च प्रपञ्चस्य ब्रह्मणो रूपतया प्रमाणान्तराप्रज्ञातस्य अत्रैव रूपतयोपदिष्टस्य निषेधासंभवात् प्रकृतैतावत्त्वं हि ब्रह्मणः प्रतिषेधति, पूर्वप्रकृतैतावन्मात्रं न भवति ब्रह्मेति हि, "अथात आदेशो नेति नेति" इत्यत्र प्रतिपाद्यत इत्यर्थः। ततो ब्रवीति च भूयः—ततः पूर्वोक्तात् भूयस्त्वं ब्रवीति च वाक्यशेषः, "न ह्येतस्मादिति नेत्यन्यत्परमस्ति। अथ नामधेयं सत्यस्य सत्यमिति। प्राणा वै सत्यं तेषामेष सत्यम्" इति। नेति निर्दिष्टादेतस्माद् ब्रह्मणोऽन्यन्न ह्यस्ति; परब्रह्मणोऽन्यत् स्वरूपतो गुणतश्चोत्कृष्टं न ह्यस्तीत्यर्थः। "सत्यस्य सत्यम्" इति ब्रह्मणो नामधेयम्। तस्य निर्वचनम्—प्राणा वै सत्यं तेषामेष सत्यम् इति। प्राणसाहचर्याज्जीवात्मानः प्राणाः। ते हि वियदादिवदनुत्पाद्यत्वेन सत्यम्। तेभ्योऽप्येष सत्यम्। ते हि कर्मानुगुणदेहयोगेन जन्मवन्तः। तदप्यस्य नास्तीति तेषामेष सत्यम्; ज्ञानसङ्कोचविकारस्याप्यसंभवात्। अतः प्रमाणान्तराप्रज्ञातस्वरूपस्य ब्रह्मणो मूर्तामूर्तप्रपञ्चप्रकारतयोपदेशात् पुनरपि प्रकारविशेषोपदेशाच्च, "अथात आदेशो नेतिनेति" इति पूर्वप्रकृतेयत्ता ब्रह्मणः प्रतिषिध्यत इत्यर्थः ॥ २१ ॥

ननु च वस्तुतः प्रत्यक्षेण निर्विशेषसन्मात्रमेव गृह्यते ; तदतिरिक्त भ्रान्त्या प्रतीयमानं सविशेषरूपमनूद्य "नेतिनेति" इति निषिध्यत इत्यत्राह—

तदव्यक्तमाह हि ३-२-२२

तत् ब्रह्म न केनापि प्रमाणेन व्यक्तम् ; तथा आह हि श्रुतिः—" न संदृशे तिष्ठति रूपमस्य " इत्यादिका ॥ २२ ॥

ब्रह्मणः प्रमाणान्तराप्रज्ञाततां द्रढयति—

अपि संराधने प्रत्यक्षानुमानाभ्याम् ३-२-२३

अपिच संराधन एवोपलभ्यते ; संराधनं सम्यक्प्रीतियुक्तं भजनम्, उपासनमिति यावत् । उपासनरूपतत्प्रीणनेन विना केनापि नोपलभ्यत इति श्रुतिस्मृतिभ्यामवगम्यते । "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यः", 'नाहं वेदैर्न तपसा न दानेन न चेज्यया...भक्त्या त्वनन्यया शक्यः' इति हि श्रुतिस्मृती । अतः केनापि प्रमाणेनानभिव्यक्तस्वरूपत्वाद्ब्रह्मणः "द्वे वाव ब्रह्मणो रूपे" इत्यादिना ब्रह्मणः प्रकारतयोपदिष्टं जगदैश्वर्यम्, "नेतिनेति" इति न निषिध्यते ; किन्तु प्रकृतेयत्तामात्रं तु निषिध्यते ॥ २३ ॥

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ३-२-२४

इतश्च ज्ञानानन्दवज्जगदैश्वर्यमपि ब्रह्मणो रूपम् । येषां वामदेवादीनां संराधनरूपकर्मण्यभ्यासात् प्रकाशश्च सञ्जातः—दर्शनम् सञ्जातम्, तेषां दर्शने प्रकाशादिवत्—ज्ञानादेरिव जगदैश्वर्यस्याप्यवैशेष्यं प्रतीयते, "तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च"; "अहं कक्षीवान्" इत्यादौ ॥ २४ ॥

अतोऽनन्तेन तथा हि लिङ्गम् ३-२-२५

अतोऽनन्तेन कल्याणगुणगणेन योगो ब्रह्मणस्सिद्धः । तथा सत्युभयलिङ्गमेव ब्रह्म ॥ २५ ॥

इति उभयलिङ्गाधिकरणम् ॥ ५ ॥

## (६) अहिकुण्डलाधिकरणम्

### उभयव्यपदेशात्त्वहिकुण्डलवत् ३-२-२६

"द्वे वाव ब्रह्मणो रूपे" इत्यादिनोपदिष्टमचिद्वस्तुनो ब्रह्मरूपत्वं किं ब्रह्मरूपस्यैवाचिद्रूपेण परिणामाद्भवति, उत परस्मिन् ब्रह्मण्यचिद्वस्तुनि चैकजातियोगात्, अथ जीववद् ब्रह्मशरीरतया ब्रह्मविशेषणत्वेनेति संशयः। भिन्नत्वाभिन्नत्वरूपोभयव्यपदेशोपपत्तये ब्रह्मैवाचिद्रूपेण परिणमत इति प्रथमः पक्षः। तथा तु सति ब्रह्मणो निर्दोषत्वादिकं बाध्येतेत्येकजातियोगेनेति द्वितीयः पक्षः। एवं सति "आत्मैवेदं सर्वम्", "ब्रह्मैवेदं सर्वम्" इति ब्रह्मस्वरूपस्यैव सर्वशब्दवाच्यत्वव्यपदेशबाधः स्यात्। न ह्येकैव गोव्यक्तिः खण्डो मुण्डः पूर्णशृङ्गो गौः इत्यादिसर्वगोव्यक्तिवाचकशब्दैरभिधीयते। अतो जीवस्येव ब्रह्मशरीरतया ब्रह्मविशेषणत्वेनाचिद्वस्तुनोऽपि ब्रह्मांशत्वमिति राद्धान्तः।

सूत्रार्थस्तु—तुशब्दोऽवधारणे। अहेः कुण्डलभावादिवद् ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थानम्; कुतः? नानात्वैकत्वोभयव्यपदेशात्॥ २६॥

### प्रकाशाश्रयवद्वा तेजस्त्वात् ३-२-२७

वाशब्दोऽनन्तरोक्तव्यावृत्त्यर्थः। यथा प्रकाशतदाश्रययोः तेजस्त्वेनैकजातियोगादभिन्नत्वं भिन्नत्वञ्च, एवमचिद्ब्रह्मणोरपि॥ २७॥

### पूर्ववद्वा ३-२-२८

वाशब्दः पक्षद्वयव्यावृत्त्यर्थः: पूर्ववत्—यथा पूर्वत्र, "अंशो नानाव्यपदेशात्", "प्रकाशादिवत्तु नैवं परः" इत्युभयव्यपदेशोपपत्तये ब्रह्मणो निर्दोषत्वसिद्धये च प्रकाशजातिगुणशरीरवत् पृथक्सिद्ध्यनर्हविशेषणतया जीवस्य ब्रह्मांशत्वमुक्तम्—एवमचिद्वस्तुनोऽपि। अचिद्वाचिशब्देनाप्यचिद्वस्तुविशिष्टं ब्रह्मैवाभिधेयमिति "आत्मैवेदं 'सर्वम्', ब्रह्मैवेदं सर्वम्," इत्यभेदव्यपदेशोपपत्तिः। विशेषणविशेष्ययोस्स्वरूपस्वभावभेदज्ञापनाय विशेषणविशेष्यौ निष्कृष्य भेदेन व्यपदेशश्चोपपद्यते, 'क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः" इति। ब्रह्मणो निर्दोषत्वञ्च॥ २८॥

प्रतिषेधाच्च ३-२-२९

"स वा एष महानज आत्माऽजरोऽमरः" "नास्य जरयैतज्जीर्यति" "विजरो विमृत्युः" इत्यादिभिः ब्रह्मणोऽचिद्धर्मप्रतिषेधाच्च विशेषणविशेष्यभावेनैवांशांशिभाव इत्यर्थः ॥ २९ ॥

इति अहिकुण्डलाधिकरणम् ॥ ६ ॥

(७) पराधिकरणम्

परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ३-२-३०

"यतो वा इमानि" इत्यादिना जगज्जन्मादिकारणतया निर्दिष्टात् परस्माद् ब्रह्मणोऽपि परं तत्त्वं किञ्चिदस्ति, नेति संशयः। इतोऽपि परमस्तीति पूर्वः पक्षः। "अथ य आत्मा स सेतुः" इति अस्य सेतुत्वव्यपदेशात्, "एतं सेतुं तीर्त्वा" इति अस्य तरितव्यत्वोपदेशाच्चातोऽन्यदप्यस्तीति गम्यते। "चतुष्पाद्ब्रह्म" "षोडशकलम्" इति परिमितत्वव्यपदेशाच्चापरिमितमन्यदस्तीति प्रतीयते। "अमृतस्यैष सेतुः" इति प्रापकत्वश्रुतेश्चानेन प्राप्यमन्यदस्तीति प्राप्यप्रापकरूपसंबन्धात् प्रतीयते। तथा, "तेनेदं पूर्णं पुरुषेण सर्वम्", "ततो यदुत्तरतरम्" इति पुरुषशब्दनिर्दिष्टाद् ब्रह्मण उत्तरतरत्वेन भेदव्यपदेशाच्चान्यत् परमस्ति।

राद्धान्तस्तु—"न ह्येतस्मादिति नेत्यन्यत्परमस्ति" इति नेति निर्दिष्टात् मूर्तामूर्तरूपाद् ब्रह्मणोऽन्यत्परं नास्तीति परतत्त्वनिषेधात्कारणात् ब्रह्मणोऽन्यत्परं नास्ति। सेतुत्वव्यपदेशस्तु "एषां लोकानामसंभेदाय" इति सर्वलोकासङ्करकरत्वकृतः। "एतं सेतुं तीर्त्वा" इति तरतिरपि 'वेदान्तं तरति' इतिवत् प्राप्तिवचनः। "चतुष्पाद्ब्रह्म", "षोडशकलम्" इत्युन्मानव्यपदेशोऽपि "वाक् पादः...चक्षुः पादः" इतिवदुपासनार्थः। संभवति चापरिमितस्यापि तत्तद्देशसंबन्धितयोन्मितत्वानुसन्धानम्। "अमृतस्यैष सेतुः" इति स्वस्यवामृतस्य स्वयमेव प्रापकमुच्यते, "यमेवैष वृणुते तेन लभ्यः" इत्यादिश्रुतेः। "ततो यदुत्तरतरम्" इत्यपि, "तेनेदं पूर्णम्" इति निर्दिष्टात्पुरुषादन्यस्य न परत्वमाह; अपि तु "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति पूर्वप्रतिज्ञातं पुरुषवेदनस्यामृतत्वहेतुत्वमन्यस्य चापथत्वं सहेतुकमुपसंहरति। "यस्मात्परं नापरमस्ति किञ्चित्" इत्यारभ्य, "तेनेदं पूर्णं

पुरुषेण सर्वम्" इति पुरुषस्य सर्वस्मात्परत्वं ज्यायस्त्वमन्यस्य परत्वाभावं च प्रतिपाद्य, ततो हेतोः यदुत्तरतरं पुरुषतत्त्वम्; तदेवारूपमनामयम्; य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति इति पूर्वप्रतिज्ञातमेवोपसंहृतम् ॥ ३० ॥

सूत्रार्थस्तु—परमतः—"जन्माद्यस्य यतः" इत्यारभ्य 'अतोऽनन्तेन तथाहि लिङ्गम्" इत्यन्तेन प्रतिपादितान्निखिलजगदेककारणात्सर्वान्तरात्मनः निरस्तनिखिलदोषगन्धानवधिकातिशयानन्तकल्याणगुणाकरात् परस्माद्ब्रह्मणः परमपि किञ्चिदस्तीति कश्चिन्मन्यते। कुतः? सेतून्मानसंबन्धभेदव्यपदेशेभ्यः। व्याख्याताश्चैते ॥ ३० ॥

## सामान्यात्तु ३-२-३१

तुशब्दः पक्षं व्यावर्तयति; सेतुत्वव्यपदेशस्तावत् तस्मात्परं नावगमयति। सेतुसामान्यात्—सादृश्याज्जगद्विधृतिरूपात् ब्रह्मणस्तथाव्यपदेश इति श्रुतिरेव सेतुशब्दं व्याचष्टे—"अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय" इति। यद्यत्स्वभावा लोकाः सृष्टास्तत्तत्स्वभावासङ्कराय सर्वान् लोकान् अयमेव सेतुवत् बिभर्तीति सेतुरित्यर्थः ॥ ३१ ॥

## बुद्ध्यर्थः पादवत् ३-२-३२

"चतुष्पाद्ब्रह्म", "पादोऽस्य विश्वा भूतानि" इत्युन्मानव्यपदेशस्तथाऽनुसन्धानार्थः; 'वाक् पादः...चक्षुः पादः" इतिवत् ॥ ३२ ॥

अपरिमितस्वरूपस्यानुसन्धानार्थतयापि कथं परिमितत्वमित्यत आह-

## स्थानविशेषात् प्रकाशादिवत् ३-२-३३

प्रतिपन्नवागादिस्थानविशेषसंबन्धात् तत्तत्स्थानसंबन्धित्वेनावच्छिद्यानुसन्धानं युज्यते; यथा प्रकाशादेर्विततस्यापि वातायनघटादौ ॥

## उपपत्तेश्च ३-२-३४

"अमृतस्यैष सेतुः" इत्यमृतस्य स्वस्य स्वयमेव प्रकाश इति सेतुत्वव्यपदेशोपपत्तेश्चान्यत्परमस्तीति कल्पनं न युज्यते। "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति हि श्रूयते ॥ ३४ ॥

## तथाऽन्यप्रतिषेधात् ३-२-३५

"तेनेदं पूर्णं पुरुषेण सर्वं" "ततो यदुत्तरतरम्" इति पुरुषादन्यस्य न परत्वमाह—"न तस्येशे कश्चन", "न ह्येतस्मादिति नेत्यन्यत् परमस्ति", "यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्"–यस्मादपरं परं नास्ति किञ्चिदित्यर्थः–एवमादिषु पुरुषादन्यस्य परत्वप्रतिषेधात्। "ततो यदुत्तरतरम्" इति तु यतः पुरुषतत्त्वमेवोत्तरतरम्; ततो हेतोः यदुत्तरतरं पुरुषतत्त्वम्; तदेव "अरूपमनामयम्" इत्यादिना ? व्याख्यात [व्य?] म् '·एतद्विदुरमृतास्ते भवन्ति" इति–"तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति प्रतिज्ञातमेवोपसंहृतम्। "न तस्येशे कश्चन तस्य नाम महद्यशः" इति च पुरुषतत्त्वमेव वदति। अनन्तरम्, "अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ" इति पुरुषतत्त्ववाचिनैकवाक्यत्वावगमात्; "अम्भस्यपारे" "यमन्तस्समुद्रे कवयो वयन्ति" इति च प्रक्रमात् ॥ ३५ ॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ३-२-३६

अनेन ब्रह्मणा सर्वस्य व्याप्तत्वम्, "तेनेदं पूर्णं पुरुषेण सर्वम्", "अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः", "नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इत्यायामशब्देभ्यः – सर्वव्याप्तिवाचिशब्देभ्योऽवगम्यते। एवमवगम्यमानमेतस्मात्परं वारयतीत्यर्थः। आदिशब्दात्, "आत्मैवेदं सर्वम्" इत्यादयो गृह्यन्ते। अतः "यतो वा इमानि" इत्यादिनाऽवगतजगन्निमित्तोपादानकारणात् (कारणभावात्?) ब्रह्मणोऽन्यत् परं न विद्यते ॥ ३६ ॥

इति पराधिकरणम् ॥ ७ ॥

## (८) फलाधिकरणम्

## फलमत उपपत्तेः ३-२-३७

किं वेदोदितं यागदानहोमादिकमुपासनाख्यं च, "यजेत" "उपासीत" इति कामिनो मुमुक्षोश्च कर्तव्यतया श्रूयमाणं कर्मैवापूर्वद्वारेण भोगापवर्गरूपफलदम्, उत तत्तदाराधनैः प्रीतः परमपुरुष एव फलद इति संशयः। कर्मैवेति पूर्वः पक्षः। लोके मर्दनादेः कृष्यादेश्च कर्मण

एव सक्षात् परम्परया वा फलप्रदत्वदर्शनात् । वेदे च "यजेत स्वर्गकामः", "आत्मानमेव लोकमुपासीत" इति कामिनो मुमुक्षोश्च कर्तव्यतया श्रूयमाणं कर्म तत्तत्फलसाधनतयाऽवगतं क्षणिकमप्यपूर्वद्वारेण भोगापवर्गरूपसर्वफलप्रदम् । राद्धान्तस्तु—कर्तव्यतयाऽवगतस्य यागादेरुपासनस्य च "यज देवपूजायाम्" इत्यादिनाऽवगतधात्वर्थस्वाभाव्यात्, "वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इति वाक्यशेषाच्च, "इष्टापूर्तं बहुधा जातं जायमानं विश्वं विभर्ति भुवनस्य नाभिः । तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः", "स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हि तान्", "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च", "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः", "तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्" इत्यादिश्रुतिस्मृतिभ्यश्च, परमपुरुष एव कर्मभिरुपासनेन चाराधितो भोगापवर्गरूपफलप्रदः । लोके च कृष्यादिकर्मभिः सस्यादिकमुत्पाद्य, तेन भृत्यद्वारेण साक्षाद्वा राजानमभ्यर्च्य, तत एवापेक्षितानि लभन्ते । अतः परमपुरुष एव फलप्रदः ॥

सूत्रार्थस्तु—फलमत उपपत्तेः—अतः—परस्माद्ब्रह्मण एव कर्मभिरुपासनेन चाराधितात् भोगापवर्गरूपफलम् । कुतः? उपपत्तेः—कर्म हि क्षणध्वंसि न कालान्तरभाविफलायालम् । स हि सर्वज्ञः सर्वशक्तिः परमकारुणिको महोदारः अनादिरनन्तश्च सर्वेश्वरः स्वाराधनरूपेण कर्मणा आराधितः फलप्रद इत्युपपद्यते ॥ ३७ ॥

## श्रुतत्वाच्च ३-२-३८

"स वा एष महानज आत्मा अन्नादो वसुदानः", "एष ह्येवानन्दयाति" इति भोगापवर्गरूपं फलमयमेव ददातीति हि श्रूयते ॥ ३८ ॥

## जैमिनिरत एव ३-२-३९

यागादिकमुपासनात्मकं च धर्ममेव फलप्रदं जैमिनिराचार्यो मन्यते; अत एव—उपपत्तेः श्रुतत्वाच्चेत्यर्थः । लोके कृष्यादेर्मर्दनादेश्च कर्मण एव साक्षात् परम्परया वा फलदायित्वदर्शनात् वेदेऽपि तथैव युक्तमित्युप-

पत्तिः। उपपद्यते चापूर्वद्वारेण साधनत्वम्। "यजेत स्वर्गकामः", "ब्रह्मविदाप्नोति परम्" इति कामिनः कर्तव्यतया कर्मविधानान्यथानुपपत्त्या कर्मैवापूर्वद्वारेण फलसाधनमित्यवगम्यते ॥ ३९ ॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ३-२-४०

तुशब्दः पक्षव्यावृत्त्यर्थः। पूर्वोक्तं परमपुरुषस्यैव फलप्रदत्वं भगवान् बादरायणो मन्यते। कुतः? हेतुव्यपदेशात्—"वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इति वाय्वाद्यात्मना अवस्थितस्य परमपुरुषस्यैव फलप्रदत्वव्यपदेशात्। "यो वायौ तिष्ठन्" इति च वाय्वाद्यात्मना स एव व्यवस्थितः श्रूयते "तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः" इति च। तत्परित्यागेनापूर्वस्य फलसाधनत्वकल्पने श्रुतहानमश्रुतकल्पनं च। विध्यपेक्षितफलसाधनत्वप्रकारे वाक्यशेषेणावगते सति न फलसाधनत्वप्रकारकल्पनं न्याय्यम्; यथैव हि रात्रिसत्रादिष्वधिकारी न कल्प्य (धिकारकल्पनम्) इत्यर्थः ॥ ४० ॥

इति फलाधिकरणम् ॥ ८ ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे
तृतीयस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

## अथ तृतीयः पादः

### (१) सर्ववेदान्तप्रत्ययाधिकरणम्

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ३-३-१

किं सर्वेषु श्रूयमाणा दहरविद्या एकैव, उत विद्यान्तरमिति संशयः। अविशेषपुनश्श्रवणस्य प्रकरणान्तरस्य च विद्याभेदहेतुत्वात् विद्यान्तरमिति पूर्वः पक्षः। चोदनाफलसंयोगरूपाख्यानामविशेषात्, प्रतिपत्तृभेदेन पुनश्श्रवणोपपत्तेः, तत एव प्रकरणान्तरत्वाभावाच्च विद्यैक्यमिति

राद्धान्तः। विद्यासु गुणोपसंहारादिचिन्तार्थं शाखान्तराधिकरणोक्तन्यायः तत्फलं च स्थिरीकृतम्।

सूत्रार्थस्तु — सर्ववेदान्तप्रत्ययमेकं दहराद्युपासनम्। कुतः? चोदनाद्यविशेषात् ॥ १ ॥

## भेदान्नेति चेदेकस्यामपि ३-३-२

अविशेषपुनश्श्रुत्या विद्याभेदावगमान्न विद्यैक्यमिति चेत्—एकस्यामपि विद्यायां शाखान्तरे प्रतिपत्तृभेदात् पुनश्श्रवणमर्थवदिति न विद्याभेदः ॥ २ ॥

"तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्" इत्याथर्वणिकानां शिरोव्रतस्य विद्योपदेशाङ्गत्वनियमदर्शनं विद्याभेदं द्योतयति, विद्यैक्ये ह्याथार्वणिकानामेवेति नियमो नोपपद्यत इत्याशङ्क्याह—

## स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ३-३-३

शिरोव्रतं न विद्याङ्गम्, अपि तु स्वाध्यायस्य तथात्वे हि—स्वाध्यायस्य तज्जन्यसंस्कारभाक्त्वे हि तन्नियमः, "नैतदचीर्णव्रतोऽधीयीत" इत्यध्ययनसंबन्धात्; समाचाराख्ये ग्रन्थे "इदमपि वेदव्रतेन व्याख्यातम्" इति वेदव्रतत्वावगमाच्च। "ब्रह्मविद्यां वदेत"—वेदविद्यामित्यर्थः। सववच्च तन्नियमः—यथा हि सवहोमाः सप्तसूर्यादयः शतौदनपर्यन्ताः आथर्वणिकैकाग्निसंबन्धिनः तत्रैव भवन्ति, तथेदमप्याथर्वणवेदसंबन्धित्वेन तत्रैव भवति ॥ ३ ॥

## दर्शयति च ३-३-४

दर्शयति च श्रुतिरुपासनस्य सर्ववेदान्तप्रत्ययत्वम्। छान्दोग्ये दहरविद्यायाम्, "तस्मिन् यदन्तः" इति विहितमपहतपाप्मत्वादिगुणाष्टकं तैत्तिरीयके केवलं "तस्मिन् यदन्तस्तदुपासितव्यम्" इत्येवोक्तम्; तदुभयत्र विद्यैकत्वे संभवति ॥ ४ ॥

## उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ३-३-५

तदेवं सर्ववेदान्तेषु दहराद्युपासने समाने—एकस्मिन् सति तत्तदुपासने वेदान्तान्तरविहितस्य गुणस्य वेदान्तान्तरे चोपसंहारः कर्तव्यः

कुतः? अर्थाभेदात्—तद्विद्याङ्गत्वेन तदुपकाराभेदात्। विधिशेषवत्—यथैकस्मिन् वेदान्ते वैश्वानरविद्यादिविधिशेषतया विहितस्य गुणस्य तदुपकारायोपसंहारः; तथा वेदान्तान्तरेऽपि तद्विद्याङ्गत्वाविशेषादुपसंहारो न्याय्यः ॥ ५ ॥

इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

## (२) अन्यथात्वाधिकरणम्

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ३-३-६

अस्ति ह्युद्गीथविद्या वाजिनां छान्दोगानां च। वाजिनां तावत्, "हन्तासुरान् यज्ञ उद्गीथेनात्ययाम" इत्यारभ्य उद्गीथे प्राणदृष्ट्योपासनं शत्रुपरिभवफलं विहितम्। छन्दोगानामपि, "तद्ध देवा उद्गीथमाजह्रुः अनेनैनानभिहनिष्यामः" इत्यारभ्य उद्गीथे प्राणदृष्ट्योपासनमेव शत्रुपरिभवफलमुक्तम्। किमुभयत्र विद्यैक्यम्, उत विद्याभेद इति संशयः चोदनाद्यविशेषाद्विद्यैक्यमिति पूर्वः पक्षः। राद्धान्तस्तु—यद्यप्युभयत्रोद्गीथे प्राणदृष्ट्योपासनमविशिष्टमुक्तम्—तथापि छन्दोगानाम् "ओमित्येतदक्षरमुद्गीथमुपासीत" इति प्रकृत्य, "उद्गीथमाजह्रुरनेनैनानभिहनिष्यामः" इत्युद्गीथावयवे प्रणवे प्राणदृष्ट्योपासनमुक्तम्; वाजिनां तु "हन्तासुरान् यज्ञ उद्गीथेनात्ययाम" इत्युपक्रमादविशेषेण कृत्स्नोद्गीथे प्राणदृष्ट्योपासनमुक्तम्। "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इति छन्दोगानामुद्गानकर्मण्युद्गीथावयवे प्रणवे प्राणदृष्टिविधानात्, वाजिनां तु, "अथ हेममासन्यं प्राणमुचुस्त्वं न उद्गायेति। तथेति तेभ्य एव प्राण उदगायत्" इति कृत्स्नोद्गीथस्य कर्तरि प्राणदृष्टिविधानाच्चोभयत्र रूपभेदाद्विद्याभेद इति ॥

सूत्रार्थस्तु—अन्यथात्वं शब्दादिति चेदिति राद्धान्तच्छायया परिचोद्य, नाविशेषादिति पूर्वपक्षी परिहरति। 'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे", "अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्" इत्येकत्रोद्गीथे प्राण-

दृष्टिशब्दात्, इतरत्रोद्गातरि प्राणदृष्टिशब्दाच्च रूपान्यथात्वमिति चेत्—न रूपभेदः; कुतः; अविशेषात् — उपक्रमे ह्यविशेषेण "उद्गीथेनात्ययाम", "उद्गीथमाजह्रुरनेनैनानभिहनिष्यामः" इत्युद्गीथस्यैवोपास्यत्वप्रतीतेः, "त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्" इति कर्मण्येवोद्गीथे कर्तृत्वमुपचर्यत इति युक्तम्; अन्यथोपक्रमविरोधः स्यात् ॥ ६ ॥

## न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ३-३-७

न चैतदस्ति—यत् रूपैक्याद्विद्यैक्यमिति ; कुतः ? प्रकरणभेदात्—छान्दोग्ये हि "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्युद्गीथावयवभूतं प्रणवमुपास्य प्रकृत्य, "उदगीथमाजह्रुः" इति वचनादुद्गीथावयवभूतः प्रणव एवोद्गीथशब्देनोच्यत इत्यवगम्यते; वाजसनेयके त्वविशेषेण, "उद्गीथेनात्ययाम" इत्युपक्रमात् कृत्स्नोद्गीथ उपास्यः। अत उद्गीथे प्राणदृष्ट्यविशेषेऽपि रूपभेदाद्विद्याभेदः। परोवरीयस्त्वादिवत्—यथैकस्यामपि शाखायाम् उद्गीथावयवभूते प्रणवे परमात्मदृष्टिविधानसाम्येऽपि हिरण्मयपुरुषदृष्टिविधानात् परोवरीयस्त्वादिगुणविशिष्टदृष्टिविधानमर्थान्तरमिति रूपभेदः—तद्वदत्रापि। एवं प्रकरणभेदेनोपक्रम एवैकत्रोद्गीथावयवविषयत्वेनान्यत्र कृत्स्नोद्गीथविषयत्वेन चोपासनभेदे सिद्धे सति उपसंहारस्थं कर्मविषयं कर्तृविषयं च प्राणदृष्टिविधानं यथाश्रुतमवतिष्ठत इत्यभिप्रायः ॥ ७ ॥

## संज्ञातश्चेत्तदुक्तम् अस्ति तु तदपि ३-३-८

उद्गीथविद्येति संज्ञैक्यात् तत्--विद्यैक्यमुक्तं चेत्-तत्-संज्ञैक्यं विधेयभेदेऽपि अस्ति तु—अस्त्येवेत्यर्थः। यथा नित्याग्निहोत्रे, कुण्डपायिनामयनाग्निहोत्रे च; यथा च छान्दोग्ये प्रथमप्रपाठकोदितासु बह्वीषु विद्यासु उद्गीथविद्येति संज्ञैक्यम् ॥ ८ ॥

## व्याप्तेश्च समञ्जसम् ३-३-९

प्रथमप्रपाठके उपक्रमवदुत्तरास्वप्युद्गीथविद्यासूद्गीथावयवस्य प्रणवस्यैवोपास्यत्वव्याप्तेर्मध्यगतस्य "तद्ध देवा उद्गीथमाजह्रुः" इत्युद्गीथशब्दस्यापि प्रणवविषयत्वमेव समञ्जसम् ॥ ३ ॥

इति अन्यथात्वाधिकरणम् ॥ २ ॥

सूत्रार्थस्तु–सर्वाभेदादित्यतोऽभेदादिति वर्तते, आनन्दादयो गुणाः सर्वासूपसंहर्तव्याः, प्रधानस्य—गुणिनो ब्रह्मणस्सर्वासु विद्यास्वभेदात्। सर्वासु परविद्यासु ब्रह्मैकमेवानुसन्धेयं चेत्, यैर्गुणैर्विना ब्रह्मस्वरूपानुसन्धानमशक्यम्, ते च ज्ञानानन्दादयोऽनुसन्धेया इत्यर्थः ॥ १० ॥

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ३-२-१२

आनन्दादीनां प्राप्तावपि, "तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः" इति प्रियशिरस्त्वादीनामप्राप्तिः; ब्रह्मस्वरूपगुणत्वाभावात् तेषाम्। ब्रह्मणः शिरःपक्षादिभेदे स्वरूपे सति ब्रह्मण उपचयापचयौ प्रसज्येयाताम्। ततश्च, "सत्यं ज्ञानमनन्तं ब्रह्म" 'आनन्दोऽजरः' इत्यादिर्विरुध्यते ॥ इ२ ॥

प्रियशिरस्त्वादिभ्य आनन्दादीनां विशेषमाह—

## इतरे त्वर्थसामान्यात् ३-२-१३

इतरे आनन्दादयः अर्थसामान्यात् ब्रह्मस्वरूपसामान्यात् सर्वास्वनुवर्तन्ते। ब्रह्मस्वरूपनिरूपणधर्मत्वेन ब्रह्मस्वरूपसमाना हि ते ॥

प्रियशिरस्त्वादयो ब्रह्मस्वरूपधर्मा न भवन्ति चेत्—तदभिधानं किमर्थमित्यत आह—

## आध्यानाय प्रयोजनाभावात् ३-३-१४

अनुचिन्तनार्थं तदभिधानम्, प्रयोजनान्तराभावात्। "ब्रह्मविदाप्नोति परम्" इति वेदितव्यतयोपदिष्टं ब्रह्म आनन्दमयं प्रियमोदादिरूपेण विभज्य शिरःपक्षादित्वेन रूपयित्वा बुद्धावारोप्यत इत्यर्थः ॥ १४ ॥

## आत्मशब्दाच्च ३-३-१५

"अन्योऽन्तर आत्माऽऽनन्दमयः" इत्यात्मशब्दाच्च प्रियशिरस्त्वादयो न ब्रह्मस्वरूपधर्माः; शिरःपक्षादयो हि नात्मधर्माः ॥ १५ ॥

## आत्मगृहीतिरितरवदुत्तरात् ३-३-१६

"अन्योऽन्तर आत्मा" इत्यात्मशब्देन परमात्मन एव गृहीतिः—ग्रहणम्; इतरवत्—"आत्मा वा इदमेक एवाग्र आसीत्" इत्यात्मशब्देन यथा परमात्मनो ग्रहणम्, तद्वत्। कथमिदमवगम्यते,? तदेकार्थादुत्तरात्, 'सोऽकामयत बहु स्याम् प्रजायेय' इत्यादिवाक्यात् ॥ १६ ॥

## अन्वयादिति चेत् स्यादवधारणात् ३-३-१७

पूर्वेषु, "अन्योऽन्तर आत्मा प्राणमयः" इत्यादिवाक्येष्वनात्मस्वप्यात्मशब्दान्वयात् कथमुत्तरवाक्यान्निर्णय इति चेत् — "तस्माद्वा एतस्मादात्मन आकाशस्संभूतः" इति प्रकृतस्यात्मन एव प्राणमयादिष्वानन्दमयपर्यन्तेषु आत्मशब्देनावधारणात् स्यादेव निर्णयः। अतः प्रियशिरस्त्वादीनामनात्मधर्मत्वात्, ज्ञानानन्दादीनामात्मस्वरूपनिरूपणधर्मत्वाच्च तेषामेव सर्वत्रोपसंहारः ॥ १७ ॥

इति आनन्दाद्यधिकरणम् ॥ ४ ॥

### (५) कार्याख्यानाधिकरणम्

## कार्याख्यानादपूर्वम् ३-३-१८

छान्दोग्यवाजसनेयकयोः ज्येष्ठं च श्रेष्ठं च प्राणमुपास्यं विधाय स होवाच किं मे वासो भविष्यतीति आप इति होचुः इत्यपां प्राणस्य वासस्त्वमुक्त्वा, "तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो भवति" इति च्छान्दोग्ये। वाजसनेयके चापां प्राणवासस्त्वमुक्त्वा "तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते" इति। आचमनेन प्राणमनग्नं कुरुत इत्यर्थः। अत्राशनात्पुरस्तादुपरिष्टाच्च किमाचमनं प्राणविद्याङ्गं विधीयते, उताचमनीयानामपां प्राणवासस्त्वानुसन्धानं विधीयत इति संशयः। "आचामेत्" इत्याचमने विधिप्रत्ययश्रवणात् स्मृत्याचारप्राप्तादाचमनादाचमनान्तरं प्राणविद्याङ्गं विधीयत इति पूर्वः पक्षः। राद्धान्तस्तु— "अशित्वा चाचामेत्" इत्याचमनं चात्र प्रतीयते; आचमनीयानामपां प्राणवासस्त्वानुसन्धानं च "आपोवासः", "अद्भिः परिदधति", "एतमेव तदनमनग्नं कुरुते" इति प्रतीयते। तत्राचमनं तावत् स्मृत्याचारप्राप्तम्; अपां प्राणवासस्त्वानुसन्धानमप्राप्तम्। "अनग्नं कुर्वन्तो मन्यन्ते", "अनग्नं कुरुते" इत्यनुवादस्वरूपं प्रतीयते। तत्राचमनान्तरकल्पनादाचमनमनूद्याचमनीयानामपां प्राणवासस्त्वानुसन्धानमप्राप्तं

विधीयत इति युक्तम्। "तदनमनग्नं कुरुते" इति "वचनानि त्वपूर्वत्वात्", "विधिर्वा स्यादपूर्वत्वात्" इति न्यायेन विधिवचनमेव भवति। सूत्रार्थस्तु—अपूर्वम् अप्राप्तमपां प्राणवासस्त्वानुसन्धानं विधेयम्, न पुनः प्राप्तमचमनम्। कुतः? कार्याख्यानात्—कार्यस्य अप्राप्तार्थस्याख्यानस्वभावत्वाच्छास्त्रस्येत्यर्थः ॥ १८ ॥

इति कार्याख्यानाधिकरणम् ॥ ५ ॥

## (६) समानाधिकरणम्

### समान एवंचाभेदात् ३-३-१९

वाजसनेयकेऽग्निरहस्ये बृहदारण्यके च शाण्डिल्यविद्याऽऽम्नाता। अग्निरहस्ये तावत् "स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्पमाकाशात्मानम्" इति। बृहदारण्यके च "मनोमयोऽयं पुरुषो भास्सत्यं तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपतिस्सर्वमिदं प्रशास्ति" इति। किमत्र विद्याभेदः, उत नेति संशयः। एकत्र सत्यसङ्कल्पत्वमधिकं श्रुतम्; इतरत्र वशित्वादयोऽधिका इति रूपभेदाद्विद्याभेद इति पूर्वः पक्षः। राद्धान्तस्तु—उभयत्र मनोमयत्वादिके समाने सति वशित्वादेः सत्यसङ्कल्पत्वविततिरूपतया तेनाभेदान्न रूपभेद इति विद्यैक्यम्। सूत्रार्थस्तु—मनोमयत्वादिके समाने सति विद्यैक्यम्, एवं चाभेदात्—वशित्वादिगुणेनाप्यभेदात्—वशित्वादिर्हि सत्यसङ्कल्पत्वविततिः ॥ १९ ॥

इति समानाधिकरणम् ॥ ६ ॥

## (७) संबन्धाधिकरणम्

### संबन्धादेवमन्यत्रापि ३-३-२०

बृहदारण्यके—"य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन्" इत्युपक्रम्य आदित्यमण्डलेऽक्षिणि च सत्यस्य ब्रह्मणो व्याहृतिशरीरत्वेनोपास्यत्वमुक्त्वा, "तस्योपनिषदहरित्यधिदैवतम्" तस्योपनि-

षदहमित्यध्यात्मम्" इति द्वे रहस्यनामनी उपासनशेषतयाऽम्नायेते। ते किं यथाश्रुतस्थाननियते, उतोभयत्रोभे इति संशयः। उभयोः स्थानयोरेकरूपस्यैवोपास्यत्वात् विद्यैक्यमित्यनियते नामनी इति पूर्वः पक्षः। अक्ष्यादित्यस्थानसंबन्धित्वरूपाकारभेदाद्रूपभेद इति विद्याभेदात् द्वे नामनी नियते इति राद्धान्तः।

सूत्रार्थस्तु—यथा मनोमयत्वादिगुणविशिष्टस्यैकस्यैवोपास्यत्वेनोभयत्र विद्यैक्यम्; एवमन्यत्राक्ष्यादित्याधारस्याप्येकस्यैव सत्यस्य ब्रह्मणः स्थानद्वयसंबन्धान्न रूपभेद इति विद्यैक्यात् द्वे नामनी अनियते ॥ २० ॥

## न वा विशेषात् ३-३-२१

नचैतदस्ति—यद्विद्यैक्यादुभयत्रोभे नामनी अनियते इति। कुतः? विशेषात्। उभयत्र हि रूपं विशिष्यते, एकत्रादित्यस्थानसंबन्धि इतरत्राक्षिस्थानसंबन्धि ब्रह्मेति रूपभेदाद्विद्याभेद इति नियते नामनी ॥ २१ ॥

## दर्शयति च ३-३-२२

दर्शयति च श्रुतिर्विद्याभेदेन गुणानुपसंहारम् "तस्यैतस्य तदेव रूपम् यदमुष्य रूपम्" इत्यादिना रूपाद्यतिदेशेन। स्वतो ह्यप्राप्तावतिदेशेन प्राप्त्यपेक्षा ॥ २२ ॥

इति संबन्धाधिकरणम् ॥ ७ ॥

### (८) संभृतिद्युव्याप्त्यधिकरणम्

## संभृतिद्युव्याप्त्यपि चातः ३-३-२३

तैत्तिरीयके, नारायणीयानां खिलेषु च, "ब्रह्म ज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान। ब्रह्म भूतानां प्रथमोथ जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः" इति ब्रह्मणि ज्येष्ठानां गुणानां संभृतिर्द्युव्याप्तिश्चेत्यादिगुणजातमाम्नातम्। किमेषां सर्वासु विद्यासूपसंहारः उत स्थानविशेषोपासनेषु नियम इति संशयः। आनारभ्याधीतत्वादेषां सर्वासूपसंहारः—इति पूर्वः पक्षः। राद्धान्तस्तु यद्यपि न स्थानविशेषसंबन्ध्युपा-

सनमारभ्याधीता एते; तथापि द्युव्याप्तिसामर्थ्यात्तस्य हृदयाद्यल्पस्थानेषूप-संहारायोगात् तत्साहचर्याच्चेतरेषामल्पस्थानविहितासु विद्यासु नोप-संहारः—इति। सूत्रार्थस्तु—सम्भृतिद्युव्याप्तीति-समाहारद्वन्द्वैकवद्भावः। सम्भृतिप्रभृतिगुणजातमप्यत एव स्थानविशेषसंबन्धनियमान्नियतम्; न सर्वत्रोपसंहार्यम्। द्युव्याप्तिर्हि स्वसामर्थ्यादल्पस्थानानर्हतया तदितर-स्थाननियता। संभृत्याद्यपि तत्साहचर्यात्तथैव ॥ २३ ॥

इति संभृत्यधिकरणम् ॥ ८ ॥

## (९) पुरुषविद्याधिकरणम्

### पुरुषविद्यायामपि चेतरेषामनाम्नानात् ३-३-२४

तैत्तिरीयके पुरुषविद्याऽऽम्नाता, "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरम्" इत्यादिका। छान्दोग्येऽपि, "पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि" इत्यादिका। किमत्र विद्याभेदः—उत नेति संशयः। पुरुषविद्येति संज्ञैक्यात्, तैत्तिरीयके फलसंबन्धा-नाम्नानात् छान्दोग्ये "शतं जीवति" इत्यनेनैकफलत्वाच्च विद्यैक्यमिति पूर्वः पक्षः। राद्धान्तस्तु—पुरुषविद्येति संज्ञैक्येपि सवनत्रयकल्पनाप्रकार-भेदात् यजमानपत्न्यादिकल्पनाप्रकारभेदाच्च रूपभेदात्, तैत्तिरीयके पूर्वानु-वाकगतस्य, "ब्रह्मणो महिमानमाप्नोति" इति ब्रह्मविद्याफलस्यैव संनि धानात् अफलस्यास्य तदङ्गतया तत्फलत्वात् फलभेदाच्च विद्याभेदः। सूत्रार्थस्तु—पुरुषविद्यायामपि उभयत्र रूपभेदाद्विद्याभेदः, कुतः? इत-रेषामनाम्नानात्—इतरशाखोदितानां तदितरशाखायामनाम्नानात् छान्दोग्ये तैत्तिरीयकाम्नातानां यजमानपत्न्यादीनां सवनानां चानाम्ना-नात्। तैत्तिरीयके च च्छान्दोग्याम्नातानां यज्ञावयवानामनाम्नानादित्यर्थः। तैत्तिरीयके हि "आत्मा यजमानः श्रद्धा पत्नी" इति यजमानादिकल्पनम्। "यत्सायं प्रातर्मध्यन्दिनं च तानि सवनानि" इति च सवनत्रयकल्पनम्, छान्दोग्ये चाशिशिषादीनां दीक्षात्वादिकल्पनम्, पुरुषायुषं त्रेधा विभज्य-कल्पनं चेति यज्ञावयवकल्पनप्रकारभेदात् रूपभेदः स्पष्टः। फलमपि तथैवेति। इतरेषामिति फलस्यापि ग्रहणम् ॥ २४ ॥

इति पुरुषविद्याधिकरणम् ॥ ९ ॥

(१०) वेधाद्यधिकरणम्

## वेधाद्यर्थभेदात् ३-३-२५

आथर्वणिकाः, तैत्तिरीयकाः, ऐतरेयिण इत्येवमादयः उपनिषदारम्भेषु "शुक्रं प्रविध्य हृदयं प्रविध्य" शं नो मित्रश्शं वरुणः, "सह नाववतु" इत्यादिमन्त्रान् महाव्रतादीनि च कर्माण्यधीयते। किमेषां विद्याङ्गत्वम्, उत नेति संशयः। सन्निधिसमाम्नानाद्विद्याङ्गत्वमिति पूर्वः पक्षः। राद्धान्तस्तु—"शुक्रं प्रविध्य हृदयं प्रविध्य" इत्यादिमन्त्रसामर्थ्यात्, महाव्रतादीनां च कर्मणां श्रुत्यादिभिश्चाभिचारद्वादशाहादिषु विनियोगात् "शं नो मित्रश्शं वरुणः" "सह नाववतु" इत्यादेर्मन्त्रस्य च, "ऋतं वदिष्यामि सत्यं वदिष्यामि", "तेजस्वि नावधीतमस्तु" इति मन्त्रसामर्थ्यादध्ययने विनियोग इति न विद्याङ्गत्वम्। सूत्रार्थस्तु—वेधाद्यर्थभेदादित्यस्य वेधाद्यर्थभेदवत् "सत्यं वदिष्यामि" तेजस्वि नावधीतमस्तु" इति शंनोमित्रादेर्मन्त्रस्याप्यध्ययनसंबन्धरूपार्थभेदान्न विद्याङ्गत्वमित्यभिप्रायः। अतः शंनोमित्रादिमन्त्र एवाधिकरणस्य विषयः॥ २५॥

इति वेधाद्यधिकरणम्॥ १०॥

---

(११) हान्यधिकरणम्

## हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्स्तुत्युपगानवत् तदुक्तम् ३-३-२६

विदुषो ब्रह्म प्राप्नुवतः पुण्यपापयोर्विमोचनं द्वयोश्शाखयोश्श्रुतम्; विमोचनं प्रवेशश्चोभयमेकस्याम्; "तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति", "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानि" इति च केवलविमोचनम्; "तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्याम्" इति केवलप्रवेशः, "तत्सुकृतदुष्कृते धूनुते तस्य प्रिया ज्ञातयस्सुकृतमुपयन्ति अप्रिया दुष्कृतम्" इत्युभयम्। किं केवलहानिचिन्तनं केवलोपायनचिन्तनमुभयचिन्तनं च सर्वासु विद्यासु विकल्पेनानुष्ठेयम्, उत समुच्चयेनेति संशयः। तथातथाऽऽम्नातस्यार्थवत्त्वाय विकल्प इति पूर्वः पक्षः। राद्धान्तस्तु—पुण्यपापप्रवेशस्य

विमोचनापेक्षत्वेन शाखान्तरस्थस्यापि प्रवेशवाक्यस्य शाखान्तरस्थविमोचनवाक्यशेषत्वात् वाक्यद्वयेनैकार्थविधानात् समुच्चयः। एकस्यां शाखायामुभयविधानं प्रतिपत्तृभेदेन परिह्रियते।

सूत्रार्थस्तु–हानौ त्विति तुशब्दः पक्षव्यावृत्त्यर्थः; हानाविति प्रदर्शनार्थम्; केवलविमोचने केवले चोपायने श्रूयमाणे तयोरितरेतरसमुच्चयोऽवश्यम्भावी; कुतः? उपायनशब्दशेषत्वात्—उपायनशब्दस्य हानिवाक्यशेषत्वादित्यर्थः। त्यक्तयोः पुण्यपापयोः प्रवेशस्थानवाचित्वादुपायनवाक्यस्य हानिवाक्यशेषत्वमवगम्यते। प्रदेशान्तराम्नातवाक्यस्य प्रदेशान्तराम्नातवाक्यशेषत्वे दृष्टान्तानाह—कुशाच्छन्दस्स्तुत्युपगानवत् इति। यथा "वानस्पत्याः कुशाः" इति प्रदेशान्तराम्नातस्य, "औदुम्बर्यः कुशाः" इति तद्विशेषवाचिप्रदेशान्तरस्थम्, यथा च "देवासुराणां छन्दोभिः" इति सामान्यतः प्रदेशान्तराम्नातस्य "देवच्छन्दांसि पूर्वम्" इति तत्क्रमविशेषवाचि प्रदेशान्तरस्थम्, यथा च "हिरण्येन षोडशिनस्स्तोत्रमुपाकरोति" इति प्रदेशान्तरस्थस्य तत्कालविशेषवाचि 'समयाविषिते सूर्ये षोडशिनस्स्तोत्र मुपाकरोति', इति प्रदेशान्तरस्थम्, यथा च "ऋत्विज उपगायन्ति" इति प्रदेशान्तरस्थस्य 'नाध्वर्युरुपगायेत्" इति तत्पर्युदासरूपं प्रदेशान्तरस्थम्, एवमुपायनवाक्यस्य हानिवाक्यशेषतया संभवन्त्यां गतौ न विकल्पो युक्तः; तदुक्तं पूर्वस्मिन् काण्डे "अपितु वाक्यशेषस्यादन्याय्यत्वाद्विकल्पस्य" इत्यादिना ॥ २६ ॥

इति हान्यधिकरणम् ॥ ११ ॥

## (१२) साम्परायाधिकरणम्

### साम्पराये तर्तव्याभावात् तथा ह्यन्ये ३-३-२७

किमिदं सुकृतदुष्कृतयोर्हानिचिन्तनम् देहवियोगकाल एकदेशः क्षीयते, अध्वनि शिष्टमित्युभयत्र कर्तव्यम्, उत देहवियोगकाल एव सर्वं क्षीयत इति संशयः। उभयत्र श्रुतेः देवयानेन पथा गमनान्यथानुपपत्त्या

चोभयत्रेति पूर्वः पक्षः, "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकम्" इति देहवियोगकाले, "स आगच्छति विरजां नदीं...तत्सुकृतदुष्कृते धूनुते" इत्यध्वन्यपि हानिश्रुतेः। देहवियोगकाले सर्वकर्मक्षये हि देवयानेन सर्वकर्मक्षये हि देवयानेन गमनसाधनं कर्म न संभवति। राद्धान्तस्तु "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति देहवियोगादूर्ध्वं ब्रह्मप्राप्तिव्यतिरेकेणानुभाव्यपुण्यपापफलाभावात्, "अश्व इव रोमाणि विधूय पापम्" इत्यादिनैकार्थ्यात्, अध्वन्याम्नातमपि "तत्सुकृतदुष्कृते धूनुते" इति वाक्यं देहवियोगकाले सङ्गमयितव्यमिति देहवियोगकाल एव हानिचिन्तनम्। सर्वकर्मक्षयेऽपि हि विद्यासामर्थ्यादेव देवयानेन पथा गमनं चोपपद्यते। विद्या हि स्वयं सूक्ष्मशरीरस्यानारम्भिकापि प्रकृतसुखदुःखोपभोगसाधनस्थूलशरीरस्य सर्वकर्मणां च निरवशेषक्षयेऽपि स्वफलभूतब्रह्मप्राप्तिप्रतिपादनाय देवयानेन पथैनं गमयितुं सूक्ष्मशरीरं स्थापयति॥

सूत्रार्थस्तु—साम्पराये—देहवियोगकाल एव चिन्तनीयम्; कुतः? तर्तव्याभावात्—देहवियोगादूर्ध्वं ब्रह्मप्राप्तिव्यतिरेकेण तरितव्यभोगाभावात्। तथा ह्यन्येऽधीयते—"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इति; "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति च॥ २७॥

## छन्दत उभयाविरोधात् ३-३-२८

एवमर्थस्वाभाव्यात् देहवियोगकाल एव निरवशेषकर्मक्षयेऽवधृते सति "तत् सुकृतदुष्कृते धूनुते" इति वाक्यखण्डः उभयाविरोधात्—उभयश्रुत्यविरोधात् छन्दतो नेयः, "अश्व इव रोमाणि विधूय पापं-धूत्वा शरीरमकृतम्"; "तस्य तावदेव चिरम्" इत्युभयश्रुत्यविरोधात् चरमश्रुतोऽपि, "तत्सुकृतदुष्कृते धूनुते" इति वाक्यखण्डः; "एतं देवयानं पन्थानमापद्यते" इति प्रथमश्रुतखण्डात् प्रागनुगमयितव्य इत्यर्थः॥ २८॥

अत्र चोदयति—

गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ३-३-२९

देवयानेन गतिश्रुतेरर्थवत्त्वं देहवियोगकालेऽध्वनि चेत्तुभयथा कर्मक्षये सत्येव। अन्यथा देहवियोगकाले एव सर्वकर्मक्षये सति सूक्ष्मशरीरस्याप्यारम्भकनाशेन स्थित्यनुपपत्तेः देवयानगतिश्रुतिर्हि विरुध्यते ॥ २८ ॥

परिहरति—

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ३-३-३०

भगवन्तमुपासीनानां देहवियोगकाले सर्वकर्मक्षयेऽप्युपपन्नो देवयानः पन्थाः। कुतः? तल्लक्षणार्थोपलब्धेः—तल्लक्षणार्थः—तज्जातीयार्थः, अकर्मलभ्यार्थोपलब्धेरित्यर्थः। उपलभ्यते ह्यकर्मलभ्यार्थो ब्रह्मोपासीनानाम्, "स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति" इत्यादिषु। लोकवत्—यथा लोके राजानमुपासीनानां प्राकृतपुरुषासाधारणातिरमणीयानेकार्थसिद्धिः—तद्वत् सर्वेशं सत्यसङ्कल्पं महोदारं परं ब्रह्मोपासीनानां सर्वमुपपन्नमित्यर्थः ॥ ३० ॥

परं ब्रह्मोपासीनानां देहपातसमये सर्वकर्मक्षयात् देहपातादूर्ध्वं कर्मफलानुभवो न विद्यत इत्येतन्न संभवति, वसिष्ठादीनां ज्ञानिनामपि कर्मफलरूपदेहान्तरसंयोगः, पुत्रजन्मविपत्त्यादिषु सुखदुःखानुभवोऽपि दृश्यते—इत्याशङ्क्याह—

यावदधिकारमवस्थितिराधिकारिकाणाम् ३-३-३१

येषां ज्ञानिनां देहपातादनन्तरमर्चिरादिका गतिः प्राप्ता; तेषां देहपातादूर्ध्वं तरितव्यकर्मफलभोगाभावात् देहपातसमय एव सर्वकर्मक्षय उक्तः। वसिष्ठादीनां तु आधिकारिकाणां यावदधिकारसमाप्ति नार्चिरादिका गतिरस्ति; अपित्वधिकारेऽवस्थितिरेव, अधिकारहेतुभूतकर्मणः फलदानायारब्धत्वात्। ज्ञानिनोऽप्यारब्धं हि कर्म फलानुभवेनैव क्षीयते ॥ ३१ ॥

इति साम्परायाधिकरणम् ॥ १२ ॥

## (१३) अनियमाधिकरणम्

### अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ३-३-३२

येषूपासनेषूपकोसलादिष्वर्चिरादिका गतिराम्नाता। किं तन्निष्ठानामेव तया ब्रह्मप्राप्तिः, उत सर्वेषां ब्रह्मोपासननिष्ठानामिति संशयः। तन्निष्ठानामेवेति पूर्वः पक्षः, इतरेषां तया ब्रह्मप्राप्तौ प्रमाणाभावात्। यत्तु पञ्चाग्निविद्यायां साधारणवचनम्, तदप्युपकोसलादिविषयमिति निश्चीयते। अन्यथोपकोसलादिष्वाम्नानानर्थक्यं स्यात्। राद्धान्तस्तु—पञ्चाग्निविद्यायाम् "य एवमेतद्विदुः येचामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसंभवन्ति" इति सामान्येन सर्वविषयं गतिश्रवणमुपकोसलादिष्वाम्नानं न बाधितुं क्षमम्, सङ्कोचकं च न भवति, विद्यास्तुत्यर्थतयाऽनुवादेनाप्युपपत्तेः। अतस्सर्वेषां तयैव ब्रह्मप्राप्तिः। सूत्रार्थस्तु—अनियमस्सर्वेषां—सर्वेषामविशेषेण तयैव प्राप्तिः। कुतः? अविरोधश्शब्दानुमानाभ्याम्—तथासत्येव श्रुतिस्मृतिभ्यामविरोधः श्रुतिश्च "ये चेमेऽरण्ये" इत्यादिका पञ्चाग्निविद्यायां निदर्शिता; स्मृतिः "अग्निर्ज्योतिरहश्शुक्लः' इत्यादिका ॥ ३२ ॥

इति अनियमाधिकरणम् ॥ १३ ॥

## (१४) अक्षरध्यधिकरणम्

### अक्षरधियां त्ववरोधस्सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ३-३-३३

बृहदारण्यके "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वम्" इत्यादि श्रूयते। तथा आथर्वणे च "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यम्" इत्यादि। किमेषामस्थूलत्वादीनां सर्वासु ब्रह्मविद्यासूपसंहारः, उत यत्र श्रुताः तत्रैवेति संशयः। विद्याविशेषरूपतया श्रुतानां सर्वविद्यासाधारणत्वाभावात् यत्र श्रुतास्तत्रैव नियता इति पूर्वः पक्षः। राद्धान्तस्तु—अस्थूलत्वादीनामप्यानन्दादिवत् ब्रह्मस्वरूपानुसन्धानान्तर्भावात् सर्वत्रैवोपसंहारः। न केवलमानन्दादिभिः ब्रह्मस्वरूपं प्रत्यगात्मनो व्यावृत्तम्। तस्यापि हि तदेव स्वरूपम्। अस्थूलत्वादिविशेषितमानन्दादि ब्रह्मणः प्रत्यगात्मनो व्यावृत्ताकारः। यद्यपि

प्रत्यगात्मा स्वभावतः स्थूलत्वाद्यचेतनधर्मासंबन्धी, तथापि तत्संबन्धार्हताऽस्त्येव। तदर्हतया हि पूर्वं तत्संबन्धः सञ्जातः। अतो ब्रह्मणस्तदनर्हस्वरूपानुसन्धानार्थतयाऽस्थूलत्वादयः सर्वत्रानुसन्धेयाः। सूत्रार्थस्तु—अक्षरधियाम् अक्षरसंबन्धिनीनामस्थूलत्वादिधियां सर्वविद्यास्ववरोधः—सङ्ग्रहणम्; कुतः? सामान्यतद्भावाभ्याम्—ब्रह्मणस्सर्वत्र समानत्वात् ब्रह्मानुसन्धानान्तर्भावाच्च तासाम्। गुणानां प्रधानानुवर्तित्वं स्वभावः। औपसदवत्—यथा जामदग्न्यचतूरात्रपुरोडाश्युपसद्गुणभूतः, 'अग्निर्होत्रं वेतु' ('अग्नेर्वेर्होत्रं वेः'?)इति मन्त्रः सामवेदपठितत्वेन सामवेदस्वरनियतोऽपि प्रधानभूतोपसदनुवर्तित्वात् याजुर्वैदिकत्वाच्चोपसदो याजुर्वैदिकोपांशुत्वसंबन्धी—तद्वदक्षरविद्यासंबन्धितयाऽधीतत्वेन तद्विद्यानियता अपि प्रधानानुवर्तित्वस्वाभाव्यात्सर्वविद्यासंबन्धिनः। तदुक्तं प्रथमकाण्डे, "गुणमुख्यव्यतिक्रमे तदर्थत्वात्" इत्यादिना ॥ ३३ ॥

एवं तर्हि "सर्वकर्मा सर्वगन्धः" इत्यादीनामपि सर्वेषां ब्रह्मगुणत्वान्न क्वचिद्व्यवस्थेत्यत्राह—

इयदामननात् ३-३-३४

इयत्-अस्थूलत्वादिविशेषितमानन्दाद्येव सर्वत्रानुसन्धेयम्; कुतः? आमननाद्धेतोः। आमननम् आभिमुख्येन मननं ब्रह्मानुसन्धानम्। ब्रह्मस्वरूपानुसन्धानं येन विना नोपपद्यते, तदेव सर्वत्रानुसन्धेयम्। अन्यत्तु तत्तत्र व्यवस्थितमित्यर्थः ॥ ३४ ॥

इति अक्षरध्यधिकरणम् ॥ १४ ॥

(१५) अन्तरत्वाधिकरणम्

अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ३-३-३५

बृहदारण्यके उषस्तप्रश्नप्रतिवचनम् "यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः योऽपानेनापानिति स त आत्मा" इत्यादि, 'अतोऽन्यदार्तम्' इत्यन्तमाम्नातम्। तथा तदनन्तरं कहोलप्रश्नप्रतिवचनम्, "योऽशनाया-

पिपासे शोकं मोहं जरां मृत्युमत्येति—"एतमात्मानं विदित्वा" इत्यादि: "अतोऽन्यदार्तम्" इत्यन्तम्। किमुभयत्र विद्यैक्यम्, उत विद्याभेद इति संशयः। पूर्वत्र प्राणनादिहेतुः प्रत्यगात्मा; उत्तरत्राशनाद्यतीतः परमात्मेत्युपास्यभेदाद्विद्याभेद इति पूर्वः पक्षः। राद्धान्तस्तु –"यत् साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तन्मे व्याचक्ष्व" इति उभयत्र प्रश्नस्य परमात्मविषयत्वादेकरूपत्वाच्च, सर्वप्राणिप्राणनापाननादिहेतुत्वस्य अशनाद्यतीतत्वस्य च प्रतिवचनद्वयावगतस्य परमात्मन्येकस्मिन्नेवोपास्ये संभवाच्च, न विद्याभेदः। सूत्रार्थस्तु — अन्तरा, "य आत्मा सर्वान्तरः" इत्युषस्तप्रश्नो भूतग्रामवत्स्वात्मनः—प्रत्यगात्मन इत्युपगन्तव्यः; अन्यथा प्रतिवचनभेदानुपपत्तिरिति चेत्—नात्र प्रत्यगात्मपरमात्मविषयं प्रश्नद्वयम्। प्रतिवचनद्वयं च परमात्मन्येकस्मिन्नेवोपास्ये संभवतीत्यर्थः। उपदेशवत्—"स्तब्धोऽस्युत तमादेशमप्राक्ष्यः" इति प्रक्रान्तायामेकस्यामेव सद्विद्यायाम् "भगवांस्त्वेव मे तद्ब्रवीत्विति" भूय एव मा भगवान्विज्ञापयतु" इत्यादिका प्रश्नावृत्तिः, प्रतिवचनभेदश्चोपास्यमाहात्म्यविशेषप्रतिपादनपरत्वेन दृश्यते; तद्वत् ॥ ३५ ॥

प्रष्टृभेदपूर्वकप्रतिवचनप्रकारभेदात् विद्याभेदोऽवर्जनीय एवेत्याशङ्क्याह—

## व्यतिहारो विशिंषन्ति हीतरवत् ३-३-३६

"यदेव साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरः" इति द्वयोः प्रष्ट्रोः प्रश्नस्यैकरूपत्वेनैकविषयत्वे निश्चिते सति उषस्तकहोलयोः प्रतिवचनगतबुद्धिव्यतिहारः कार्यः। प्राणनादिहेतुत्वबुद्धिस्सर्वान्तरात्मविषया कहोलेनापि कार्या, तथाऽशनायाद्यतीतत्वबुद्धिरुषस्तेनापि कार्या। विशिंषन्ति ह्युभयत्रापि याज्ञवल्क्यवचनान्येकं सर्वान्तरमेवोपास्यम्। इतरवत्—यथेतरत्र सद्विद्यायां सर्वाणि प्रतिवचनानि परमकारणपरब्रह्मविषयाणि; तद्वत् ॥ ३६ ॥

सद्विद्यायामप्युपास्यैक्यं प्रश्नप्रतिवचनावृत्तौ सत्यां कथमवगम्यत इत्यत्राह—

## सैव हि सत्यादयः ३-३-३७

"सेयं देवतैक्षत" इत्यादिषु सर्वत्र सैव परा देवतैकाऽनुवर्तते। "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि" इति त एव सत्यादयः सर्वेषु प्रतिवचनेषूपसंह्रियन्ते ॥ ३७ ॥

इति अन्तरत्वाधिकरणम् ॥ १५ ॥

### (१६) कामाद्यधिकरणम्

## कामादीतरत्र तत्र चायतनादिभ्यः ३-३-३८

छान्दोग्ये श्रूयते, "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्" इत्यादि प्रक्रम्य "तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति" इति; वाजसनेयके च "य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः" इत्यादि; किमुभयत्र विद्यैक्यम्, उत विद्याभेद इति संशयः। रूपभेदाद्विद्याभेद इति पूर्वः पक्षः, यद्यप्युभयत्र परमात्मैवोपास्यः, तथाप्येकत्राकाशशब्दाभिधेयः परमात्मोपास्यः, इतरत्राकाशे शयानः परमात्मेति हि रूपं भिद्यते। राद्धान्तस्तु—हृदयायतनत्वसत्यसङ्कल्पत्वसत्यकामत्वादेरभेदादुभयत्र तद्विशिष्टः परमात्मैवोपास्य इति रूपाभेदात् विद्यैक्यम्; छान्दोग्ये हि, "दहरोऽस्मिन्नन्तर आकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इत्यारभ्य, 'किं तदत्र विद्यते' इत्यादिना परिचोद्य, "तस्मिन्कामाःसमाहिताः एष आत्माऽपहतपाप्मा विजरो विमृत्युः" इत्यारभ्य, "सत्यकामस्सत्यसङ्कल्पः" इत्युक्त्वा, "तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्" इति, 'आकाशशब्दनिर्दिष्टः परमात्मा; तदन्तर्गताश्च सत्यकामत्वसत्यसङ्कल्पत्वापहतपाप्मत्वादयो गुणाः; अतः परमात्मा हृदयायतनः सत्यकामत्वादिविशिष्टः उपास्य' इति वाक्येनैव निर्णीतम्। वजसनेयके च "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी" इत्युक्ते सति वशित्वादेस्सत्य-

सङ्कल्पत्वविशेषरूपतया स एव परमात्मा हृदयायतनः सत्यसङ्कल्पत्व-विशिष्ट उपास्य इति प्रतीयते। अतो दहरविद्याप्रत्यभिज्ञानात् स एव परमात्मा सत्यसङ्कल्पत्वादिगुणाष्टकविशिष्ट उपास्य इति निश्चीयते। एवं निश्चिते सति, 'आकाशे शयान' इत्याकाशशब्दोऽपि हृदयपुण्डरीकवर्त्या-काशवाचीति रूपाभेदाद्विद्यैक्यमेव॥

सूत्रार्थस्तु—कामादीतरत्र तत्र च—वाजसनेयके छान्दोग्ये च सत्यकामत्वाद्येव रूपम्; कुतः? आयतनादिभ्यः—हृदयायतनत्वसत्य-सङ्कल्पत्वविशेषरूपवशित्वादिभ्यः तत्सहचारिणस्सत्यकामत्वादेः प्रत्यभि-ज्ञानात्। "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते", "अभयं वै ब्रह्म भवति" इति ब्रह्मप्राप्तिरूपं फलं चैकमिति विद्यैक्यम्॥ ३८॥

"मनसैवानुद्रष्टव्यं नेह नानाऽस्ति" इत्यादेः पूर्वप्रकृतत्वात्, "एष नेति नेत्यात्मा" इति च वक्ष्यमाणत्वात्, "सर्वस्य वशी सर्व-स्येशानः" इत्यादिविशेषणानां ब्रह्मस्वरूपत्वाभावात् कथं सत्यकामत्वा-देर्मोक्षसाधनोपासनरूपत्वमित्यत आह—

आदरादलोपः ३-३-३९

वशित्वादेः प्रमाणान्तराविदितरूपस्य श्रुत्येकसमधिगम्याकारेण प्रति पादनादलोपः अप्रतिषेधः। तस्यापि ब्रह्मगुणत्वमवश्याश्रयणीयम्; अवि-शेषनिषेधास्तु सकलेतरप्राकृतविशेषविषयाः, नानात्वनिषेधस्तु सर्वस्य-ब्रह्मकार्यतयाऽब्रह्मात्मकत्वाभिप्रायः॥ ३९॥

सगुणोपासनस्य "स यदि पितृलोककामो भवति" इति सांसा-रिकफलत्वेन न मोक्षफलत्वमित्याशङ्क्याह—

उपस्थितेऽतस्तद्वचनात् ३-३-४०

उपस्थितिः—उपस्थानम्, ब्रह्मोपसम्पत्तिः; उपस्थिते—ब्रह्मोप-सम्पन्ने, अतः ब्रह्मोपसंपत्तेरेव हेतोः, तद्वचनात्—पितृलोकादिप्राप्ति-वचनात् न तत् सांसारिकं फलम्, अपितु साक्षान्मुक्तस्यैव, "अस्मा-च्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते। स उत्तमः पुरुषः स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञाति-भिर्वा नोपजनं स्मरन्निदं शरीरम्" इति, "स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति" इति च निवृत्ताविद्यस्य हि स्वेन रूपेणाभि-निष्पन्नस्यैवोच्यते; अतो ब्रह्मोपसंम्पत्तिहेतुकत्वं क्रीडनादेरवगम्यते॥

इति कामाद्यधिकरणम्॥ १६॥

## सैव हि सत्यादयः ३-३-३७

"सेयं देवतैक्षत" इत्यादिषु सर्वत्र सैव परा देवतैकाऽनुवर्तते। "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि" इति त एव सत्यादयः सर्वेषु प्रतिवचनेषूपसंह्रियन्ते ॥ ३७ ॥

इति अन्तरत्वाधिकरणम् ॥ १५ ॥

### (१६) कामाद्यधिकरणम्

## कामादीतरत्र तत्र चायतनादिभ्यः ३-३-३८

छान्दोग्ये श्रूयते "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्" इत्यादि प्रक्रम्य "तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति" इति; वाजसनेयके च "य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः" इत्यादि; किमुभयत्र विद्यैक्यम्, उत विद्याभेद इति संशयः। रूपभेदाद्विद्याभेद इति पूर्वः पक्षः, यद्यप्युभयत्र परमात्मैवोपास्यः, तथाप्येकत्राकाशशब्दाभिधेयः परमात्मोपास्यः, इतरत्राकाशे शयानः परमात्मेति हि रूपं भिद्यते। राद्धान्तस्तु— हृदयायतनत्वसत्यसङ्कल्पत्वसत्यकामत्वादेरभेदादुभयत्र तद्विशिष्टः परमात्मैवोपास्य इति रूपाभेदात् विद्यैक्यम्; छान्दोग्ये हि, "दहरोऽस्मिन्नन्तर आकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इत्यारभ्य, 'किं तदत्र विद्यते' इत्यादिना परिचोद्य, "तस्मिन्कामाःसमाहिताः एष आत्माऽपहतपाप्मा विजरो विमृत्युः" इत्यारभ्य, "सत्यकामस्सत्यसङ्कल्पः" इत्युक्त्वा, "तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्" इति, 'आकाशशब्दनिर्दिष्टः परमात्मा; तदन्तर्गताश्च सत्यकामत्वसत्यसङ्कल्पत्वापहतपाप्मत्वादयो गुणाः; अतः परमात्मा हृदयायतनः सत्यकामत्वादिविशिष्टः उपास्य' इति वाक्येनैव निर्णीतम्। वजसनेयके च "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी" इत्युक्ते सति वशित्वादेस्सत्य-

सङ्कल्पत्वविशेषरूपतया स एव परमात्मा हृदयायतनः सत्यसङ्कल्पत्वविशिष्ट उपास्य इति प्रतीयते। अतो दहरविद्याप्रत्यभिज्ञानात् स एव परमात्मा सत्यसङ्कल्पत्वादिगुणाष्टकविशिष्ट उपास्य इति निश्चीयते। एवं निश्चिते सति, 'आकाशे शयान' इत्याकाशशब्दोऽपि हृदयपुण्डरीकवर्त्याकाशवाचीति रूपाभेदाद्विद्यैक्यमेव॥

सूत्रार्थस्तु—कामादीतरत्र तत्र च — वाजसनेयके छान्दोग्ये च सत्यकामत्वाद्येव रूपम्; कुतः? आयतनादिभ्यः—हृदयायतनत्वसत्यसङ्कल्पत्वविशेषरूपवशित्वादिभ्यः तत्सहचारिणस्सत्यकामत्वादेः प्रत्यभिज्ञानात्। "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते", "अभयं वै ब्रह्म भवति" इति ब्रह्मप्राप्तिरूपं फलं चैकमिति विद्यैक्यम्॥ ३८॥

"मनसैवानुद्रष्टव्यं नेह नानाऽस्ति" इत्यादेः पूर्वप्रकृतत्वात्, "एष नेति नेत्यात्मा" इति च वक्ष्यमाणत्वात्, "सर्वस्य वशी सर्वस्येशानः" इत्यादिविशेषाणां ब्रह्मस्वरूपत्वाभावात् कथं सत्यकामत्वादेर्मोक्षसाधनोपासनरूपत्वमित्यत आह—

## आदरादलोपः ३-३-३९

वशित्वादेः प्रमाणान्तराविदितरूपस्य श्रुत्येकसमधिगम्याकारेण प्रतिपादनादलोपः अप्रतिषेधः। तस्यापि ब्रह्मगुणत्वमवश्याश्रयणीयम्; अविशेषनिषेधास्तु सकलेतरप्राकृतविशेषविषयाः, नानात्वनिषेधस्तु सर्वस्य ब्रह्मकार्यतयाऽब्रह्मात्मकत्वाभिप्रायः॥ ३९॥

सगुणोपासनस्य "स यदि पितृलोककामो भवति" इति सांसारिकफलत्वेन न मोक्षफलत्वमित्याशङ्क्याह—

## उपस्थितेऽतस्तद्वचनात् ३-३-४०

उपस्थितिः—उपस्थानम्, ब्रह्मोपसम्पत्तिः; उपस्थिते—ब्रह्मोपसम्पन्ने, अतः ब्रह्मोपसंपत्तेरेव हेतोः, तद्वचनात्—पितृलोकादिप्राप्तिवचनात् न तत् सांसारिकं फलम्, अपितु साक्षान्मुक्तस्यैव, "असाच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते। स उत्तमः पुरुषः स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम्" इति, "स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति" इति च निवृत्ताविद्यस्य हि स्वेन रूपेणाभिनिष्पन्नस्यैवोच्यते; अतो ब्रह्मोपसंम्पत्तिहेतुकत्वं क्रीडनादेरवगम्यते॥

इति कामाद्यधिकरणम्॥ १६॥

(१७) तन्निर्धारणाधिकरणम्

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ३-३-४१

छान्दोग्ये "ओमित्येतदक्षरमुद्गीथमुपासीत" इति कर्माङ्गाश्रयमुद्गीथाद्युपासनं श्रूयते : तत् किं तस्मिन्कर्मणि पर्णतादिवन्नियमेनोपादेयम्, उत गोदोहनादिवदनियमेनेति संशयः। कर्माङ्गाश्रयत्वेन पर्णतादिवत्तद्द्वारेण निरूढकार्यतया "यदेव विद्यया, करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति वर्तमाननिर्देशस्य पृथक्फलप्रतिपादनायोगात् क्रत्वर्थतया नियमेनोपादेयमिति पूर्वः पक्षः। राद्धान्तस्तु— "तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद" इत्युद्गीथोपासनरहितस्यापि क्रत्वनुष्ठानदर्शनात् क्रतुफलात्स्वर्गादेः पृथग्भूतवीर्यवत्तरत्वफलमिदमुपासनमिति गोदोहनादिवदनियमः। वर्तमाननिर्देशे सत्यप्यधिकारान्तरनिश्चये सति रात्रिसत्रवत् क्रतोर्वीर्यवत्तरत्वमस्योपासनस्य फलमिति कल्पनीयम्। सूत्रार्थस्तु—तन्निर्धारणानियमः—निर्धारणम् निश्चयेन चेतसोऽवधारणम्, उपासनमित्यर्थः ; तस्य उद्गीथोपासनस्यानियमः; कुतः? तद्दृष्टेः—"तेनोभौ कुरुतः" इत्यनियमदृष्टेः ; पृथग्भूतं ह्यस्य फलम्; तच्चाप्रतिबन्धरूपम् ; वीर्यवत्तरत्वं नाम—प्रबलकर्मान्तरफलेनैतस्य कर्मणः फलस्याप्रतिबन्धः, अविलम्बितत्वमित्यर्थः ॥ ४१ ॥

इति तन्निर्धारणानियमाधिकरणम् ॥ १७ ॥

(१८) प्रदानाधिकरणम्

## प्रदानवदेव तदुक्तम् ३-३-४२

दहरविद्यायाम् "तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" इत्यपहतपाप्मत्वादिगुणानामपि परमात्मस्वरूपचिन्तनवत्पृथक्चिन्तनं विहितम्। किं गुणचिन्तने तत्तद्गुणविशिष्टतया परमात्मचिन्तनमावर्तनीयम्, उत नेति संशयः। परमात्मन एकस्यैव सर्वेषां

गुणानां गुणित्वेव तच्चिन्तनोपपत्तेर्नावर्तनीयमिति पूर्वः पक्षः। राद्धान्तस्तु-गुणिनस्स्वरूपैक्येऽपि तत्तद्गुणविशिष्टाकारभेदादावर्तनीयम् — इति। सूत्रार्थस्तु—प्रदानवदावर्तनीयमेव, यथा "इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे" इतीन्द्रस्यैकत्वेऽपि राजत्वादिविशिष्टाकारभेदाद्देवताभेद इति प्रदानावृत्तिः—तद्वदेव। तदुक्त सङ्कर्षे "नाना वा देवतापृथक्त्वात्" इति॥ ४२॥

इति प्रदानाधिकरणम्॥ १८॥

(१९) लिङ्गभूयस्त्वाधिकरणम्

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ३-३-४३

तैत्तिरीया अधीयते "सहस्रशीर्षं देवम्" इत्यारभ्य, "सोऽक्षरः परमस्स्वराट्" इत्यन्तम्। अस्मिन्ननुवाके नोपासनं विधीयते। किमयं पूर्वानुवाकोदितदहरविद्योपास्यविशेषनिर्धारणार्थः, उत सर्ववेदान्तोदितसर्वपरविद्योपास्यविशेषनिर्धारणार्थ इति संशयः। दहरविद्याया आनन्तर्यात्तदुपास्यविशेषनिर्धारणार्थ इति पूर्वः पक्षः, "सहस्रशीर्षं देवम्" इति द्वितीयानिर्देशस्यानन्तरोदितोपासिना संबन्धस्यैव युक्तत्वाच्च। राद्धान्तस्तु — परब्रह्मपरतत्त्वपरज्योतिःपरमात्माक्षरशिवशम्भुशब्दैस्सर्वपरविद्योपास्यान् अनूद्य वाक्येनैव तेषां नारायणत्वविधानात्तस्य च प्रकरणात् बलीयस्त्वेन सर्वविद्योपास्यनिर्धारणार्थ इति निश्चीयते। न च "सहस्रशीर्षम्" इति द्वितीयानिर्देशः पूर्वेणोपासिना संबध्यते, तस्मिन् यदन्तस्तदुपासितव्यम्" इति कृत्प्रत्ययेन कर्माभिहितमिति तत्र द्वितीयानिर्देशायोगात्। "नारायणः परः", "व्याप्य नारायणस्स्थितः", "परमात्मा व्यवस्थितः" इत्यादिभिरैकार्थ्यात्प्रथमार्थे द्वितीया।

सूत्रार्थस्तु—सर्वपरविद्योपास्यनिर्धारणे लिङ्गभूयस्त्वात्=तच्चिह्नभूतवाक्यभूयस्त्वादित्यर्थः। तद्धि=वाक्यं प्रकरणाद्बलीयः तदपि पूर्वस्मिन् काण्डे "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षात्" इत्यादिनोक्तम्। एवं सर्वोपास्यनिर्धारणे निश्चिते सति दहरविद्यायामप्ययमेवोपास्य इति, "पद्मकोशप्रतीकाशम्" इत्यादिना हृदयाद्यभिधानं च युज्यत इत्यभिप्रायः॥

इति लिङ्गभूयस्त्वाधिकरणम्॥ १९॥

## (२०) पूर्वविकल्पाधिकरणम्

### पूर्वविकल्पः प्रकरणात् स्यात्क्रिया मानसवत् । ३-३-४४

वाजसनेयकेऽग्निरहस्ये "मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः" इत्यादिना मनश्चिदादयोऽग्नयो विद्यारूपाः श्रूयन्ते । किमेते क्रियामयक्रत्वङ्गभूताः, उत विद्यामयक्रत्वङ्गभूता इति संशयः । अस्मिन् प्रकरणे विद्यामयक्रत्वनुबन्धिमानसग्रहस्तोत्रादिदर्शनेऽपि क्रतोर्विधानाभावात्, फलान्तराप्रतीतेश्च, पूर्वत्र "असद्वा इदमग्र आसीत्" इत्यादिनेष्टकचितस्याग्नेः प्रकृतत्वात्, मनश्चिदादिषु च "तेषामेकैक एव तावान् यावानसौ पूर्वः" इति तत्कार्यातिदेशादिष्टकचितेनैषां विकल्पप्रतीतेश्च इष्टकचिताग्निशेषभूतक्रियामयक्रत्वनुप्रवेशेन तदङ्गभूता इति पूर्वः पक्षः ।

राद्धान्तस्तु—"ते हैते विद्याचित एवं विद्यया हैवैत एवंविदश्चिता भवन्ति" इति मनश्चिदादीनाम् साम्पादिकाग्नित्वेन विद्यारूपत्वे सिद्धेऽपि "ते हैते विद्याचित एव" इत्यवधारणश्रुतिर्विद्यामयक्रत्वङ्गत्वेनैषां विद्यारूपतावगत्यर्थेति निश्चयात् सन्निहितैर्मानसैः ग्रहस्तोत्रादिभिः क्रत्वनुबन्धैरनुवादसरूपवाक्यप्रतिपादितैः क्रतुदर्शने सति "वचनानि त्वपूर्वत्वात्" इति न्यायेन मनश्चिदादीनाम् शेषिभूतविद्यामयक्रतोर्विधिः परिकल्प्यते । "तेषामेकैक एव तावान्यावानसौ पूर्वः" इत्यतिदेशेनेष्टकचिताग्नेस्स्वशेषिभूतक्रतुद्वारेण यत्फलम्, तदेवैषां स्वशेषिभूतविद्यामयक्रतुद्वारेण फलमिति निश्चीयत इति विद्यामयक्रत्वङ्गभूता एव मनश्चिदादयः ।

सूत्रार्थस्तु—मनश्चिदादिः क्रिया स्यात्—क्रियामयक्रत्वङ्गभूत इत्यर्थः । कुतः? प्रकरणात् पूर्वप्रकृतेनेष्टकचितेताव्यभिचरितक्रतुसंबन्धिनोपस्थितक्रतुगृहीतत्वेन तदङ्गभूतानामेषां चाग्नित्वात्तेनेष्टक चितेन विकल्पः; विद्यारूपाणामप्येषां क्रियामयक्रत्वङ्गभावो न विरुध्यते, द्वादशाहाङ्गभूतमानसग्रहवत् ॥ ४४ ॥

### अतिदेशाच्च ३-३-४५

"तेषामेकैक एव तावान् । यावानसौ पूर्वः" इति तेषु पूर्वेष्टकाचितकार्यातिदेशाच्च तेनैषां विकल्पः प्रतीयते । तेन विकल्पो हि तच्छेषिभूतक्रत्वङ्गत्वेन विनैषां नोपपद्यते । अतश्च तदङ्गभूताः ।

विद्यैव तु निर्धारणात् दर्शनाच्च ३-३-४६

तुशब्दः पक्षं व्यावर्तयति; मनश्चिदादिः विद्यामयक्रत्वङ्गभूत एवेत्यर्थः। कुतः? निर्धारणात्। तेषां विद्यारूपत्वे सिद्धेऽपि "ते हैते विद्याचित एव" इति निर्धारणं विद्यामयक्रत्वङ्गतयैषां विद्यामयत्वख्यापनार्थम्। अत्रैव विद्यामयक्रतुदर्शनाच्च तदङ्गत्वमेवैषाम्। दृश्यते चात्र विद्यामयः क्रतुः, "मनसैषु ग्रहा अगृह्यन्त मनसाऽस्तुवन्त मनसाऽशंसन्" इत्यादौ ॥ ४६ ॥

अत्र विद्यामयक्रतौ विधिपदाश्रवणात्, तत्फलसंबन्धाप्रतीतेश्च, प्रकरणेनेष्टकचिताग्न्युपस्थापितक्रत्वङ्गताप्रतीतेश्च विद्यामयक्रत्वन्वयो बाध्यत इत्याशङ्क्याह—

श्रुत्यादिबलीयस्त्वाच्च न बाधः ३-३-४७

श्रुत्यादेः प्रकरणाद्बलीयस्त्वेन श्रुत्याद्यवगतस्य विद्यामयक्रत्वन्वयस्य प्रकरणेन न बाधः। श्रुतिस्तावत्, "ते हैते विद्याचित एव" इति। तां विवृणोति, "विद्यया हैवैत एवंविदश्चिता भवन्ति" इति। लिङ्गवाक्ये च भाष्ये दर्शिते। एवंविदः-मनश्चक्षुरादिव्यापारेष्वग्नित्वं सम्पादयितुः-एते—मनश्चिदादयः, विद्यया प्रधानभूतया चिता भवन्तीत्यर्थः ॥ ४७ ॥

"मनसैषु ग्रहा अगृह्यन्त" इत्यादौ विधिपदाश्रवणाद्विद्यामयक्रतुविधिर्न संभवतीति तदसंभवाच्च तदन्वयो [ऽपि] न संभवतीत्याशङ्क्याह—

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ३-३-४८

ग्रहस्तोत्रशस्त्रेभ्यो यज्ञानुबन्धेभ्यः इष्टकचितान्वयिनः क्रतोरत्र विधीयमानविद्यामयक्रतुपृथक्त्वमवगम्यते; प्रज्ञान्तरपृथक्त्ववत् — यथा प्रज्ञान्तराणां दहरविद्यादीनां पृथक्त्वहेतुभ्यः पृथक्त्वम्; आदिशब्दात् पूर्वोक्तः श्रुत्यादिर्गृह्यते। श्रुत्यादिनाऽनुबन्धैश्च विद्यामयक्रतुविधिः कल्प्यत इत्यर्थः। दृष्टश्चानुवादसरूपेऽपि कल्प्यमानो विधिः, "यदेव विद्यया करोति" इत्यादौ। तदुक्तम्, "वचनानि त्वपूर्वत्वात् इति ॥ ४८ ॥

यत्तूक्तमतिदेशाच्चेष्टकचितशेषिभूतक्रत्वन्वयोऽवगम्यत इति, तत्राह-

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ३-३-४९

नावश्यमतिदेशेनेष्टकचिताग्नितुल्यदेशत्वमवश्याश्रयणीयम्, येन केनचित्सामान्येनातिदेशोपलब्धेः। "स एष मृत्युर्य एष एतस्मिन् मण्डले पुरुषः" इतिवत् फलसामान्येन भविष्यत्यतिदेशः। न हि तत्र मण्डलपुरुषे मृत्युलोकापत्तिरप्यतिदिश्यते; अपि तु मृत्युवत् सर्वसंहर्तृत्वमेव॥

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ३-३-५०

परेण च ब्राह्मणेनास्य मनश्चिदाद्यभिधायिनः शब्दस्य ताद्विध्यं तद्विधत्वम्, विद्यामयप्रतिपादकत्वमवगम्यते। परेण हि ब्राह्मणेन, "अयं वाव लोक एषोऽग्निश्चितः तस्याप एव" इत्यादिना पृथक्फला विद्यैव विधीयते। अग्निरहस्ये क्रियामया एव विधीयन्त इति नास्ति नियम इत्यर्थः। क्रियाप्रकरणे त्वेषां मनश्चिदादीनामनुबन्धः सम्पादनीयानामग्न्यङ्गानामत्र भूयस्त्वात् क्रियते। अतो विद्यामयक्रत्वङ्गभूता एव मनश्चिदादयोऽग्नयः॥ ५०॥

इति पूर्वविकल्पाधिकरणम् (२०)

### (२१) शरीरेभावाधिकरणम्

## एक आत्मनश्शरीरे भावात् ३-३-५१

प्रत्यगात्मन आत्मतया हि परमात्मोपास्यः; उपासकस्यापि स्वरूपमुपास्योपासनस्वरूपवत् ज्ञातव्यमित्युक्तम्, "त्रयाणाम्" इत्यादिना। वक्ष्यते च "आत्मेति तूपगच्छन्ति" इति। तत्र किं प्रत्यगात्मनः शरीरे वर्तमानस्य कर्तृत्वभोक्तृत्वादिविशिष्टं रूपमनुसन्धेयम् उत प्रजापतिवाक्योदितापहतपाप्मत्वादिगुणकं यथावस्थितं रूपमिति संशयः। शरीरे वर्तमानस्य यादृशं रूपम्, तदेवानुसन्धेयमिति पूर्वः पक्षः, कर्मविधिष्विवोपासनविधिष्वपि तावतैव साधनानुष्ठानफलानुभवयोस्संभवात्। "यथाक्रतुरस्मिंल्लोके पुरुषो भवति" इति तु, "तं यथायथोपासते"

इत्यनेनैकार्थ्यात्परमात्मविषयम्। राद्धान्तस्तु—"तत्त्वमसि" "स त आत्माऽन्तर्याम्यमृतः" इति प्रत्यगात्मन आत्मतयैव परमात्मा उपास्य इति प्रत्यगात्मनस्स्वरूपमप्युपासनान्तर्गतम्; "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति यथावस्थितात्मस्वरूपस्यैव ब्रह्मानुभवः फलमित्यतः "यथाक्रतुरस्मिंल्लोके पुरुषो भवति" इति न परमात्ममात्रविषयम्; अपितु प्रत्यगात्मात्मभूतोपास्यविषयमिति प्रजापतिवाक्योदितं यथावस्थितस्वरूपमेवानुसन्धेयम्; अन्यथा प्राप्योपास्ययोः प्रकारभेदात् "यथाक्रतुरस्मिन्" इति विरुध्यते; "यजेत स्वर्गकामः" इत्यादिकर्मविधौ तु कर्तृस्वरूपानुसन्धानं न साधनान्तर्गतमिति विशेषः।

सूत्रार्थस्तु—कर्तृत्वादिविशिष्टमेवात्मनस्स्वरूपमनुसंधेयमित्येके मन्यन्ते। कुतः? शरीरे वर्तमानस्योपासितुरात्मनस्तथाभावात् ॥ ५१ ॥

## व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ३-३-५२

न कर्तृत्वादिविशिष्टमनुसन्धेयम्, अपितु सांसारिकस्वरूपान्मुक्तस्वरूपस्य यो व्यतिरेकः, सोऽनुसन्धेयः; कुतः? तथोपासनभावभावित्वात्तद्व्यतिरिक्तस्वरूपप्राप्तेः। "यथाक्रतुरस्मिंल्लोके पुरुषो भवति" इति ह्याह। उपलब्धिवत्—यथा ब्रह्मस्वरूपोपलब्धिर्यथावस्थितब्रह्मानुसन्धानयुक्तस्यैव, तथा आत्मोपलब्धिरपि ॥ ५२ ॥

इति शरीरे भावाधिकरणम् ॥ २१ ॥

## (२२) अङ्गावबद्धाधिकरणम्

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ३-३-५३

"ओमित्येतदक्षरमुद्गीथमुपासीत" इत्युद्गीथादिक्रत्वङ्गाश्रया उपासनाः श्रूयन्ते; ताः किं यासु शाखासु श्रूयन्ते, तास्वेव व्यवस्थिताः, उत सर्वासु शाखासु संबद्धा इति संशयः। शाखासु स्वरभेदात् प्रतिशाखमुद्गीथभेदेन, यत्र श्रूयन्ते, तत्रस्थोद्गीथादेस्सन्निधानात् तेनैवान्विता व्यवस्थिता इति पूर्वः पक्षः। राद्धान्तस्तु यद्यप्युद्गीथव्यक्तिभेदो विद्यते, तथापि तत्रतत्र चोद्गीथजातीयत्वेन संबन्धात्सर्वेषां चोद्गीथजाती-

यत्वाविशेषात् "उद्गीथमुपासीत" इति श्रुत्यैव सर्वसंबन्ध इति सर्व-शाखासु संबध्यन्ते। सूत्रार्थस्तु—न त्वङ्गावबद्धा उपासनाः तासु व्यवस्थिताः, अपितु प्रतिवेदं सर्वशाखासु संबध्यन्त इत्यर्थः। हिहेतौ। यस्मादुद्गीथजातीयत्वाविशेषेण सर्वसंबन्धः, तस्मादित्यर्थः ॥ ५३ ॥

मन्त्रादिवद्वाऽविरोधः ३-३-५४

वाशब्दश्चार्थे। यथा मन्त्रादीनां क्रत्वङ्गभूतानामेकैकशाखाभिहितानां सर्वशाखासु क्रतोरेकत्वेन सर्वत्र संबन्धो न विरुध्यते; तद्वच्चाविरोधः ॥

इति अङ्गावबद्धाधिकरणम् ॥ २२ ॥

(२३) भूमज्यायस्त्वाधिकरणम्

भूम्नः क्रतुवत् ज्यायस्त्वं तथा हि दर्शयति ३-३-५५

वैश्वानरविद्यायां स्वर्लोकादित्यवाय्वाकाशपृथिव्यवयवो वैश्वानरात्मा उपास्यश्श्रुतः; तत्र, किं व्यस्तस्यैवोपासनं कार्यम् उत व्यस्तस्य समस्तस्य च, अथ समस्तस्यैवेति संशयः। "औपमन्यव कं त्वमात्मानमुपास्स इति। दिवमेव भगवो राजन्" इत्यादिना स्वर्लोकादिपृथिव्यन्तानां वैश्वानरात्मनो मूर्धादिपादान्तावयवत्वमभिधाय, तत्रतत्र व्यस्तस्यैवोपासनं फलं च विहितमिति, पश्चात्, "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति पूर्वोक्तस्य समासेनोपसंहार इति युक्तम्; अतो व्यस्तस्यैवोपासनं कार्यमिति प्रथमः पक्षः। समस्तोपासनस्य, "सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इति व्यस्तोपासनफलेभ्यः फलान्तरविधानात् व्यस्तस्य समस्तस्य चोपासनं कार्यमिति द्वितीयः पक्षः। राद्धान्तस्तु—"आत्मानं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" इत्यारभ्य वैश्वानरात्मनस्स्वर्लोकादिपृथिव्यन्तानां मूर्धादिपादान्तावयवत्वमभिधाय, "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु" इत्युपसंहारादेकस्यैव वैश्वानरात्मनः त्रैलोक्यशरीरस्य

परस्य ब्रह्मणः उपासनं विधाय फलं च, "सर्वेष्वात्मस्वन्नमत्ति" इति, "तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति च सर्वेषामात्मनामविशेषेण भोग्यभूतं परं ब्रह्मानुभवति, तद्विरोधिनश्च सर्वपाप्मनः दहतीत्युक्तमिति गम्यते। अत एकवाक्यत्वात् समस्तस्यैवोपासनं कार्यम्। व्यस्तवादस्तु स्वर्लोकादीनां मूर्धाद्यवयवत्वज्ञापनार्थः तत्रतत्र च फलवादः, "वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते। यदष्टाकपालो भवति" इत्यादिवत् द्रष्टव्यः।

सूत्रार्थस्तु—भूम्नो ज्यायस्त्वम्—समस्तोपासनस्य श्रैष्ठ्यम्ः प्रामाणिकत्वमित्यर्थः। एकवाक्यत्वावगतेः। व्यस्तवादः क्रतुवत् द्रष्टव्यः। "वैश्वानरं द्वादशकपालं निर्वपेत्....यदष्टाकपालः इत्यादिः क्रताविवेत्यर्थः। तथा हि दर्शयति—समस्तोपासनस्य ज्यायस्त्वमेव दर्शयति श्रुतिः—"मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्यः" इत्यादिना व्यस्तोपासनेऽनर्थं ब्रुवती ॥ ५५ ॥

इति भूमज्यायस्त्वाधिकरणम् ॥ २३ ॥

(२४) शब्दादिभेदाधिकरणम्

## नाना शब्दादिभेदात् ३-३-५६

सद्विद्यादहरविद्याशाण्डिल्यविद्याभूमविद्यादिकाः ब्रह्मोपासनरूपाः ब्रह्मप्राप्तिफलाः किमेकविद्या, उत नानेति संशयः। उपास्यस्य ब्रह्मणः फलस्य चैकत्वात्, 'वेद' 'उपासीत' इति च पर्यायत्वादेकविद्येति पूर्वः पक्षः। ब्रह्मण एकत्वेऽपि जगदेककारणत्वापहतपाप्मत्वाद्यनुबन्धभेदहेतुभिः, पूर्वकाण्डोदितानुबन्धभेदहेतुभिश्शब्दान्तरादिभिरेवानुबन्धभेदात् नानाभूता इति राद्धान्तः। शब्दान्तरादिभिस्तत्रोदितैरेव विद्याभेदसिद्धावपीह पुनर्वचनं ब्रह्मप्राप्तिहेतुभूतं वेदान्तोदितं ज्ञानमविधेयमिति कुदृष्टिनिरासार्थम्। सूत्रार्थस्तु—सद्विद्याभूमविद्यादिका नानाभूताः ब्रह्मण एकत्वेऽपि सद्भूमापहतपाप्मादिशब्दभेदात्। आदिशब्दात् अभ्याससङ्ख्यागुणप्रक्रियानामधेयानि गृह्यन्ते ॥ ५६ ॥

इति शब्दादिभेदाधिकरणम् ॥ २४ ॥

## (२५) विकल्पाधिकरणम्

### विकल्पोऽविशिष्टफलत्वात् ३-३-५७

सद्विद्याभूमविद्यादिकानां ब्रह्मप्राप्तिफलानामेकस्मिन् पुरुषे समुच्चयोऽपि संभवति, नेति संशयः। अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादीनां स्वर्गैकफलानां तत्र भूयस्त्वापेक्षया यथैकस्मिन् पुरुषे समुच्चयो दृश्यते; तथाऽत्रापि ब्रह्मानुभवभूयस्त्वापेक्षयैकस्मिन् पुरुषे समुच्चयः संभवति—इति पूर्वः पक्षः। देशतः कालतःस्वरूपतश्चानवच्छिन्नानन्दरूपब्रह्मानुभवः सर्वासां परविद्यानां फलम्; तच्चैकया विद्ययाऽवाप्तमित्येकस्मिन् पुरुषे विद्यान्तरसमुच्चयः प्रयोजनाभावान्न संभवतीति सर्वासां विकल्पः—इति राद्धान्तः। सूत्रमपि व्याख्यातम् ॥ ५७ ॥

### काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ३-३-५८

ब्रह्मप्राप्तिव्यतिरिक्तफला विद्याः काम्याः। तास्तु यथेष्टं समुच्चीयेरन्; विकल्पेरन् वा; पूर्वहेत्वभावात्—तत्फलस्यापरिमितत्वाभावात् भूयस्त्वापेक्षया समुच्चयस्संभवतीत्यर्थः ॥ ५८ ॥

इति विकल्पाधिकरणम् ॥ २५ ॥

## (२६) अङ्गेषुयथाश्रयभावाधिकरणम्

### अङ्गेषु यथाश्रयभावः ३-३-५९

क्रत्वाश्रयाणामुद्गीथाद्युपासनानां गोदोहनादिवदधिकारान्तरत्वेनोपादानानियमः पूर्वोक्तः संभवति, नेति संशयः न संभवतीति पूर्वः पक्षः, "उद्गीथमुपासीत" इत्युपासनविधौ फलान्तराश्रवणात्, उद्गीथसंबन्धावगतक्रत्वङ्गभावाविरोधात्। एवं विधिवाक्येनैव क्रत्वङ्गभावेऽवगते सति, "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति....तेनोभौ कुरुतः" इति च वर्तमाननिर्देशः, "न स पापं श्लोकं शृणोति" इतिवदर्थवादमात्रं स्यात्। राद्धान्तस्तु—"यदेव

विद्यया करोति...तदेव वीर्यवत्तरम्" इति विद्यायाः क्रतुवीर्यवत्तरत्वं प्रति साक्षात्साधनभावोऽवगम्यते। एवं फलसाधनतयाऽवगता विद्या किमाश्रित्य फलं करोतीत्यपेक्षायाम्, "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्युद्गीथमाश्रित्य कुर्यादिति क्रत्वङ्गभूतोद्गीथाश्रयत्वमात्रं प्रतीयते, अतः फलान्तरसाधनतयाऽवगतस्य क्रत्वङ्गभावो नोपपद्यत इति गोदोहनादितुल्यतयोपादानानियमः सिध्द्यत्येव। "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्यत्र तु पर्णताया जुहूसंबन्धात्प्राक् अपापश्लोकश्रवणं प्रति साक्षात्साधनभावो न श्रूयते; पर्णतासंबन्धिपुरुषसंबन्धमात्रं श्रुतम्। तत्तु "पर्णमयी जुहूः" इति श्रुत्यैव प्रथमावगतक्रत्वङ्गभावं न निरुणद्धीत्यर्थवादमात्रमिति विशेषः। सूत्रार्थस्तु—अङ्गेषु—उद्गीथादिष्वाश्रितानामुपासनानां यथाश्रयभावः—उद्गीथादिवदङ्गभावः। गोदोहनादिवत् तस्मिन् वाक्ये फलसंबन्धाश्रवणादङ्गभावो न विरुध्यत इत्यर्थः॥ ५९॥

## शिष्टेश्च ३-३-६०

शिष्टिः—शासनम्, विधानम्। "उद्गीथमुपासीत" इति विधानाच्च वर्तमाननिर्देशावगतफलसंबन्धात्प्रागेवोद्गीथसंबन्धोऽवगत इति तदङ्गभावो न विरुध्यते। अत उपादाननियमः॥ ६०॥

इतश्च

## समाहरात् ३-३-६१

"होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति" इत्युद्गीथवेदनहानौ अन्येन समाधानं ब्रुवत् वेदनस्योपादाननियमं दर्शयति। दुरुद्गीथं वेदनहीनमुद्गीथम्॥ ६१॥

इतश्चोपादाननियमोऽवगम्यते—

## गुणसाधारण्यश्रुतेश्च ३-३-६२

प्रणवगुणत्वेनावगतस्योपासनस्य साधारण्यं हि श्रूयते "तेनेयं त्रयी विद्या वर्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति" इति। तेनेति प्रकृतपरामर्शात्सोपासन एव प्रणवः सर्वत्र सञ्चरति। अतः प्रणवसहभावनियमदर्शनादुपादाननियमो निश्चीयते॥ ६२॥

## न वा तत्सहभावाश्रुतेः ३-३-६३

न वोपादाननियमः, तत्सहभावाश्रुतेः—उद्गीथाद्यङ्गभावाश्रुतेरित्यर्थः। क्रत्वङ्गभावो हि सहभावः। "यदेव विद्यया करोति...तदेव वीर्यवत्तरम्" इति वीर्यवत्तरत्वसाधनतयाऽवगताया विद्यायाः क्रत्वङ्गतया विनियोगासंभवात् तदङ्गभावो हि न श्रूयते। यत्र साक्षात्फलसाधनत्वं प्रतिपाद्यते, तत्र फलसाधनत्वं प्रथमं प्रतीयत इति तस्य क्रत्वङ्गतया विनियोगो न संभवतीत्यभिप्रायः ॥ ६३ ॥

## दर्शनाच्च ३-३-६४

"एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति" इति श्रुतिः ब्रह्मणो वेदनेन यज्ञस्य यजमानस्य ऋत्विजां च रक्षणं ब्रुवत्यन्येषां वेदनाभावं दर्शयति। तच्चोद्गीथोपासनस्यानङ्गत्वे सत्येवोपपद्यते। अतश्चोपादानानियमः ॥ ६४ ॥

इति यथाश्रयभावाधिकरणम् ॥ २६ ॥

---

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे
तृतीयस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

---

### तृतीयाध्याये चतुर्थः पादः

### (१) पुरुषार्थाधिकरणम्

## पुरुषार्थोऽतश्शब्दादिति बादरायणः ३-४-१

किं विद्यातः पुरुषार्थः, उत कर्मण इति संशयः। कर्मण इति पूर्वः पक्षः। कर्माङ्गत्वाद्विद्यायाः कर्मसु कर्तृभूतप्रत्यगात्मनो याथात्म्यप्रतिपादनपराणि वेदान्तवाक्यानि। विद्यायाः कर्माङ्गत्वं च, "यदेव विद्यया करोति...तदेव वीर्यवत्तरम्" इति श्रुत्यैवावगम्यते। न च प्रकृतो-

द्गीथोपासनविषयत्वमस्य वक्तुं शक्यते, "यदेव विद्यया करोति" इति श्रुत्यैव कर्मसु सर्वविद्याया विनियुक्तत्वात्। श्रुतिश्च प्रकरणाद् बलीयसी। विद्यायाः कर्माङ्गत्वं कथमित्यपेक्षायां "तत्त्वमसि", "अय मात्मा ब्रह्म" इति सामानाधिकरण्येन कर्माङ्गभूतकर्तृयाथात्म्यानुसन्धान-द्वारेण विद्यायाः कर्माङ्गत्वमित्यवगम्यते। अतः कर्तृसंस्काररूपत्वाद्-ब्रह्मविद्यायाः कर्मण एव पुरुषार्थः। तत्रतत्र फलश्रुतिरर्थवादस्स्यात्। विद्यायाः कर्माङ्गत्वे भूयांसि लिङ्गानि च दृश्यन्ते सर्ववेदान्तेषु।

राद्धान्तस्तु—कर्मसु कर्तुः प्रत्यगात्मनोऽर्थान्तरभूतस्य स्वसङ्कल्प-कृतजगदुदयविभवलयलीलस्य निखिलहेयप्रत्यनीककल्याणैकतानानन्तज्ञा-नानन्दैकस्वरूपस्य सर्वेश्वरस्य सत्यसङ्कल्पस्य करणाधिपरूपप्रत्यगात्मा-धिपस्य वेद्यस्य वेदनरूपाया विद्यायाः, "ब्रह्मविदाप्नोति परम्" इत्यादिषु ब्रह्मप्राप्तिरूपफलोपदेशात् विद्यात एव फलम्। "यदेव विद्यया करोति" इति श्रुतिः प्रसिद्धवन्निर्देशात्, प्रसिद्धिश्च प्रकृतोद्-गीथोपासनस्यैवेति, प्रस्तुतोद्गीथोपासनविशेषनिष्ठा। "तत्त्वमसि" इति सामानाधिकरण्यं च तच्छब्दनिर्दिष्टस्य स्वसङ्कल्पकृतजगज्जन्म-स्थितिध्वंसादिकस्य परस्य ब्रह्मणो न जीवस्वरूपत्वपरम्; अपितु जगत्कारणस्य ब्रह्मणो जीवशरीरकतया जीवस्यात्मत्वपरमिति "अधिकं तु भेदनिर्देशात्" इत्यादिषूक्तम्। "य आत्मनि तिष्ठन्...यस्यात्मा शरीरम्" इति च प्रत्यगात्मन आत्मत्वं परस्य ब्रह्मणः श्रुत्यन्तरे व्यक्तम्।

सूत्रार्थस्तु—पुरुषार्थोऽतः—विद्यातः; कुतः? "ब्रह्मविदाप्नोति परम्" इत्यादिशब्दात्॥ ५॥

## शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ३-४-२

"तत्त्वमसि" इत्यादिसामानाधिकरण्येन ब्रह्मणः कर्मसु कर्तृस्वरूप-त्वावगमाद्विद्यायाः कर्तृसंस्कारद्वारेण कर्मशेषत्वात्तत्र पुरुषार्थवादोऽर्थ-वादमात्रम्; यथा अन्येषु द्रव्यसंस्कारादिष्विति जैमिनिराचार्यो मन्यते॥ २

इतश्च विद्या कर्माङ्गम्—

## आचारदर्शनात् ३-४-३

ब्रह्मविदामाचारो हि कर्मप्रधानो दृश्यते। यथाऽश्वपतिः केकयो ब्रह्मविदग्रेसरः "यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि" इत्याह। "कर्म-णैव हि संसिद्धिमास्थिता जनकादयः" इति च स्मर्यते॥ ३॥

लिङ्गमिदम्; प्राप्तिरुच्यतामित्यत्राह—

## तच्छ्रुतेः ३-४-४

"यदेव विद्यया करोति" इत्यादिकायाश्श्रुतेर्विद्यायाः कर्माङ्गत्वमवगम्यते। न च दुर्बलेन प्रकरणेन श्रुतिर्विद्याविशेषोद्गीथविषयोपासने व्यवस्थाप्यते ॥ ४ ॥

## समन्वारम्भणात् ३-४-५

"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोरेकस्मिन् पुरुषे साहित्यं च विद्यायाः कर्माङ्गत्वे हि भवति ॥ ५ ॥

## तद्वतो विधानात् ३-४-६

विद्यावतः कर्मविधानाच्च विद्या कर्माङ्गम्। "आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे" इत्यादिनाऽध्ययनवतः कर्माणि विदधदर्थावबोधपर्यन्तत्वादध्ययनस्य विद्यावत एव कर्माणि विदधातीत्यवगम्यते ॥ ६ ॥

## नियमात् ३-४-७

"कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः" इत्यात्मविदामायुषः कर्मसु नियमदर्शनाच्च कर्मण एव पुरुषार्थः; न विद्यात इत्यवगम्यते। अतश्च विद्या कर्माङ्गम् ॥ ७ ॥

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ३-४-८

तुशब्दात्पक्षो व्यावृत्तः। बादरायणस्यैवं—विद्यातः फलमिति मतम्; कुतः? अधिकोपदेशात्—कर्मसु कर्तुः प्रत्यगात्मनोऽधिकस्य—अर्थान्तरभूतस्य वेद्यस्य वेदनभूतविद्यायाः फलसाधनत्वोपदेशात्। तद्दर्शनात्—दृश्यते हि वेदान्तवाक्येऽधिकविषयत्वं विद्यायाः। एवमेव हि "तदैक्षत बहु स्यां प्रजायेयेति", "सोऽकामयत बहु स्यां प्रजायेय" इत्यादिषु बहुभवनसङ्कल्पपूर्वकसृष्ट्यादेः कर्तुस्सर्वेश्वरस्य करणाधिपाधिपस्यानवधिकातिशयज्ञानानन्दैकस्वरूपस्य निखिलहेयप्रत्यनीकस्य वेद्यस्य विद्या ब्रह्मप्राप्तिफलाय विधीयते।

## तुल्यं तु दर्शनम् ३-४-९

विद्यायाः प्रधानत्वेऽपि ब्रह्मविदामाचारदर्शनं तुल्यम्। कर्मणामनाचारदर्शनमप्यस्तीत्यर्थः। "ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इत्यादौ। कर्मानुष्ठानदर्शनं तु फलाभिसन्धिरहितस्य कर्मणो विद्याङ्गत्वात्। त्यागस्तु फलाभिसंधियुक्तस्य विद्याविरोधित्वादित्यभिप्रायः ॥ ९ ॥

## असार्वत्रिकी ३-४-१०

"यदेव विद्यया करोति" इति श्रुतिः सर्वविद्यायाः कर्माङ्गत्वं विदधातीत्येतदसङ्गतम्। अत्र विद्याशब्दाभिहिता तु न सार्वत्रिकी, अपितूद्गीथविद्या। यत्करोति, तद्विद्ययेति नैवं पदान्वयः; अपितु यदेव विद्यया करोति तदेव वीर्यवत्तरमिति। विद्यया क्रियमाणस्यान्यतोऽवगतस्य वीर्यवत्तरत्वं प्रति साधनभावोऽवगम्यते, यदेवेति प्रसिद्धवन्निर्देशात्। अन्यतोऽवगतिर्हि "उद्गीथमुपासीत" इति सन्निहितोद्गीथविद्यायाः ॥

## विभागः शतवत् ३-४-११

"तं विद्याकर्मणी समन्वारभेते" इत्यत्र विद्या च स्वस्मै फलाय कर्म च स्वस्मै फलायान्वारभत इति विभागो द्रष्टव्यः, यतो विद्याकर्मणोर्भिन्नफलत्वमुक्तम्। शतवत्—क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्युक्ते क्षेत्रार्थं शतं रत्नार्थं शतमिति विभागोऽवगम्यते; तद्वत् ॥ ११ ॥

## अध्ययनमात्रवतः ३-४-१२

"वेदमधीत्य" इत्यध्ययनमात्रवत एव कर्मविधानात् अनेन विद्याया न कर्माङ्गत्वमवगतम्; अध्ययनविधिर्ह्याधानवत् नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति; गृहीतस्य स्वाध्यायस्य फलवदर्थावबोधित्वदर्शनात्तन्निर्णयफलमीमांसाश्रवणे अधीतवेदः पुरुषः स्वयमेव प्रवर्तते। अर्थावबोधपर्यन्तत्वेऽप्यर्थज्ञानादर्थान्तरभूता स्मृतिप्रत्ययावृत्तिरूपा "विद्यात्" "उपासीत" इति शास्त्रविहिता विद्या न कर्माङ्गम् ॥ १२ ॥

## नाविशेषात् ३-४-१३

"कुर्वन्नेवेह कर्माणि" इति ब्रह्मविदामायुषः कर्मणि नियमो दृश्यत इत्येतन्न संभवति, अविशेषात्—विदुष एवेति विशेषाभावात् किमित्यविदुषो न स्यात्, विदुषस्त्वाप्रयाणादुपासनानुवृत्तिदर्शनादर्थस्वभावात् विदुष एवेत्यभिप्रायः ॥ १३ ॥

## स्तुतयेऽनुमतिर्वा ३-४-१४

वाशब्दोऽवधारणे । "ईशा वास्यमिदं सर्वम्" इति विद्याप्रकरणाद्विद्यास्तुतये कर्मानुमतिरेव । विद्यामाहात्म्यात् सर्वदा कर्माणि कुर्वन्नपि तैर्न लिप्यत इति हि स्तुता भवति विद्या । वाक्यशेषे च "न कर्म लिप्यते नरे" इति श्रूयते ॥ १४ ॥

## कामकारण ३-४-१५

एके शाखिनः कामकारेण च विद्यानिष्ठस्य गार्हस्थ्यत्यागमधीयते । "किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः" इति गार्हस्थ्यकर्मत्यागं ब्रुवद्वाक्यं विद्या प्रधानमिति दर्शयति ॥ १५ ॥

## उपमर्दं च ३-४-१६

विद्यया सर्वकर्मोपमर्दं चाधीयते, 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति। तत् विद्यायाः कर्माङ्गत्वे न सङ्गच्छते ॥ १६ ॥

## ऊर्ध्वरेतेस्सु च शब्दे हि ३-४-१७

ऊर्ध्वरेतस्सु आश्रमेषु ब्रह्मविद्यादर्शनात् तेषु चाग्निहोत्रादिकर्माभावान्न विद्या कर्माङ्गम् । ते चात्राश्रमाः सन्त्येव; यतो वैदिके शब्दे तेऽपि दृश्यन्ते, "त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानम्" इति "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्यादौ । "यावज्जीवमग्निहोत्रम्" इत्यादिका तु श्रुतिरविरक्तविषया ॥ १७ ॥

## परामर्शं जैमिनिरचोदनाच्चापवदति हि ३-४-१८

"त्रयो धर्मस्कन्धाः" इत्यादिषु तेषामाश्रमाणामचोदनात्—अविधानात् उपासनास्तुत्यर्थं परामर्शमनुवादं जैमिनिराचार्यो मन्यते। अपि च अपवदति हि श्रुतिराश्रमान्तरम्, "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्यादिका। अतस्ते न सन्त्येव ॥ १८ ॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ३-४-१९

गृहस्थाश्रमवदाश्रमान्तरमप्यनुष्ठेयं भगवान् बादरायणो मन्यते; कुतः? तस्यापि तत्साम्यश्रुतेः—"त्रयो धर्मस्कन्धाः" इत्येवमादौ हि सर्वेषामाश्रमाणामेकरूपं सङ्कीर्तनम् ॥ १९ ॥

## विधिर्वा धारणवत् ३-४-२०

वाशब्दोऽवधारणे; सर्वेषामाश्रमाणां विधिरेवायम्। धारणवत्—यथा "अधस्तात्समिधं धारयन्ननुद्रवेत्", उपरि हि देवेभ्यो धारयति" इत्यनुवादसरूपेऽप्युपरिधारणस्याप्राप्तत्वेन विधिराश्रीयते; एवमिहाश्रमाणामपि। अतः ऊर्ध्वरेतस्स्वपि विद्यादर्शनाद्विद्यातः पुरुषार्थ इति ॥ २०

इति पुरुषार्थाधिकरणम् ॥ १ ॥

### (२) स्तुतिमात्राधिकरणम्

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ३-४-२१ भावशब्दाच्च २२

"ओमित्येतदक्षरमुद्गीथमुपासीत", "स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथः" इत्येतज्जातीयके किं कर्माङ्गाश्रयाणां दृष्टिविशेषाणां विधिरास्थेयः उतोद्गीथादिस्तुतिमात्रमिति संशयः। विधित्वे सिद्धे हि गोदोहनादिवद्भवति विधित्वमेव न संभवतीति पूर्वः पक्षः। "इयमेव जुहूस्स्वर्गो लोक आहवनीयः" इतिवत् कर्माङ्गभूतोद्गीथादिसंबन्धितयोपादानाद्रसतमत्वादेः तत्स्तुतिमात्रत्वमेव; न रसत-

मत्वादिदृष्टिविधिः। राद्धान्तस्तु—जुह्वादिविधिवदुद्गीथादिविधेरत्रासन्निधानात्, रसतमत्वादेरप्राप्तत्वाच्च, "उपासीत" इति विधिप्रत्ययेन च न स्तुतिमात्रम्, तद्दृष्टिविधिरेव। सूत्रद्वयमपि व्याख्यातम् ॥ २१ । २२ ॥

इति स्तुतिमात्राधिकरणम् ॥ २ ॥

(३) पारिप्लवार्थाधिकरणम्

पारिप्लवार्था इति चेन्न विशेषितत्वात् ४-४-२३,

तथाचैकवाक्योपबन्धात् ४-४-२४

"प्रतर्दनो ह वै दैवोदासिः" इत्यादयो वेदान्तेष्वाख्यानविशेषाः किं पारिप्लवप्रयोगार्थाः, उत तत्रतत्र विद्याविशेषप्रतिपादनार्थाः इति संशयः। "आख्यानानि शंसन्ति" इति पारिप्लवे विनियोगात्तदर्थाः इति पूर्वः पक्षः। राद्धान्तस्तु—"आख्यानानि शंसन्ति" इत्युक्त्वा, "मनुर्वैवस्वतो राजा" इति मन्वाद्याख्याने विनियोगस्य विशेषितत्वात् "तं मामायुरमृतमित्युपास्व", "आत्मा वा अरे द्रष्टव्यः" इत्यादिविधिनैकवाक्यत्वाच्च, "सोऽरोदीत्" इत्यादिवद्विद्याविध्यर्था एव। सूत्रद्वयमपि व्याख्यातम् ॥ २३ । २४ ॥

इति पारिप्लवार्थाधिकरणम् ॥ ३ ॥

---

(४) अग्नीन्धनाद्यधिकरणम्

अत एव चाग्नीन्धनाद्यनपेक्षा ३-४-२५

ऊर्ध्वरेतस्सु आश्रमेषु ब्रह्मविद्या संभवति, नेति संशयः। यज्ञाद्यभावात्तेषां तदङ्गिका विद्या न संभवतीति पूर्वः पक्षः। राद्धान्तस्तु—"यदिच्छन्तो ब्रह्मचर्यं चरन्ति", "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति", "इत्यादिश्रुतेः तेषां विद्यावत्त्वावगमात्तेष्वग्निहोत्राद्यनपेक्षा विद्येति निश्चीयते। सूत्रार्थस्तु—अत एव—विद्यावत्त्वश्रुतेरेव आधानाद्यनपेक्षा तेषु विद्या। अग्नीन्धनं हि अग्न्याधानम् ॥ २५ ॥

इति अग्नीन्धनाद्यधिकरणम् ॥ ४ ॥

## (५) सर्वापेक्षाधिकरणम्

### सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ३-४-२६

कर्मवत्सु गृहस्थेषु किं यज्ञादिकर्मापेक्षा विद्या, उत तत्रापि केवलै-वेति संशयः। ऊर्ध्वरेतस्सु यज्ञाद्यनपेक्षैवामृतत्वं साधयति चेत्—कर्मनिरपेक्षाया विद्याया एव साधनत्वमभ्युपगमनीयम्। तथा सति गृहस्थेष्वपि तन्निरपेक्षैव साधयितुं समर्थेति पूर्वः पक्षः। न हि स्वर्गादि-साधनभूतमग्निहोत्रादिकर्म पुरुषभेदेन नानाविधाङ्गकं दृष्टम्। "विविदि-षन्ति" इति शब्दोऽपि वेदनेच्छायां कर्माणि विनियुङ्क्ते; न विद्यायाम्। राद्धान्तस्तु—कर्मवत्सु गृहस्थेषु यज्ञादिसर्वकर्मापेक्षा विद्या; कुतः? यज्ञादिश्रुतेः—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इति हि यज्ञादयो विद्याङ्गत्वेन विनियुज्यन्ते। अतो गृहस्थेषु कर्मापेक्षा विद्या। इच्छाया इष्यमाणप्रधानत्वात् "विविदिषन्ति" इतीष्यमाणं ज्ञानमेवेत्यवगम्यते। यथा गमनसाधनभूतोऽश्वः स्वपरिकरबन्धरूप-परिकर्मापेक्षः—एवं मोक्षसाधनभूता विद्याऽपि नित्यनैमित्तिकपरिकर्मा-पेक्षा। ऊर्ध्वरेतस्सु च स्वाश्रमविहितं कर्मैव परिकर्म भवतीति तेष्वपि विद्यासंबन्धः शास्त्रादवगम्यते। शास्त्रैकसमधिगम्ये हि यथाशास्त्रमभ्यु-पगमनीयम्। सूत्रमपि व्याख्यातम् ॥ २६ ॥

इति सर्वापेक्षाधिकरणम् ॥ ५ ॥

## (६) शमदमाद्यधिकरणम्

### शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ३-४-२७

किं विद्यानिर्वृत्तये गृहस्थैः शमदमादय उपादेयाः, उत नेति संशयः। गृहस्थानामान्तरबाह्यकरणव्यापाररूपकर्माङ्गकत्वाद्विद्यायाः, तद्विपरीतरूपशमदमाद्युपादानासामर्थ्यादूर्ध्वरेतस्सु कर्मरहितेषु शमादि-विनियोगो भविष्यति, यथा यज्ञादिविनियोगः कर्मवत्सु गृहस्थेषु। तस्मा-दनुपादेयाः शमादय इति पूर्वः पक्षः। राद्धान्तस्तु — "तस्मादेवं-

विच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इति सामान्येन विद्याङ्गतया विनियोगाद् गृहस्थैरप्युपादेयाः। न च कर्मवतां तेषां शमाद्युपादानासामर्थ्यम्, भिन्नविषयत्वाच्छमादेः। विहितेषु हि कर्मसु करणव्यापारः; अविहितेषु प्रयोजनशून्येषु च शमदमादयः। अतः शमादिविनियोगो यज्ञादिविनियोगवन्न सङ्कोचमर्हति—इति। सूत्रार्थस्तु—यद्यपि गृहस्थो यज्ञादिकर्मसु विनियुक्तः, तथापि तु शमदमाद्युपेतस्स्यात्; कुतः? "शान्तो दान्तः" इत्यादिना तद्विधेः तदङ्गतया—विद्याङ्गतया विद्यानिष्पत्तये तेषामवश्यानुष्ठेयत्वाच्च। एकाग्रतानिष्पाद्यत्वाच्छमदमादिभिरेव विद्यानिष्पत्तिरित्यर्थः। यज्ञादिकर्माण्यपि पापनिबर्हणद्वारेणैकाग्रतामापादयन्तीत्यभिप्रायः ॥ २७ ॥

इति शमदमाद्यधिकरणम् ॥ ६ ॥

## (७) सर्वान्नानुमत्यधिकरणम्

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ३-४-२८

वाजिनां छन्दोगानां च प्राणविद्यायाम् "न ह वा एवंविदि किञ्चनानन्नं भवति" इति सर्वान्नानुमतिः सङ्कीर्त्यते। किं प्राणविदस्सर्वान्नानुमतिस्सर्वदा, उत प्राणात्ययापत्ताविति संशयः। अविशेषात् सर्वदेति पूर्वः पक्षः। अतिशयितशक्तेर्ब्रह्मविदोऽपि उच्छिष्टपरिग्रहणभक्षणयोः प्राणात्ययापत्तावेव दर्शनादल्पशक्तेः प्राणविदः किं पुनरिति प्राणात्ययापत्तावेवेति राद्धान्तः। सूत्रार्थस्तु—चशब्दोऽवधारणे; प्राणविदः सर्वान्नानुमतिः प्राणात्यय एव; कुतः? तद्दर्शनात्—अतिशयितशक्तेः ब्रह्मविदः प्राणात्यय एव सर्वान्नानुमतिदर्शनात् ॥ २८ ॥

## अबाधाच्च ३-४-२९

"आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः" इत्याहारशुद्धिविधेरबाधाच्च प्राणात्यय एव ॥ २९ ॥

## अपि स्मर्यते ३-४-३०

"प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" इति प्राणसंशय एव सर्वान्नानुमतिः स्मर्यते च ॥ ३० ॥

## शब्दश्चातोऽकामकारे ३-४-३१

यतः सर्वान्नानुमतिः प्राणात्यये, अतोऽकामकारे शब्दश्च—कामकारस्य प्रतिषेधकशब्दश्चोपपद्यत इत्यर्थः। अस्ति हि कठानां कामकारप्रतिषेधकश्शब्दः, "तस्माद्ब्राह्मणः सुरां न पिबति पाप्मना नोत्सृजा" इति। पाप्मना संस्पृष्टो न भवानीति मत्वा सुरां न पिबतीत्यर्थः ॥ ३१ ॥

इति सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥

### (८) विहितत्वाधिकरणम्

## विहितत्वाच्चाश्रमकर्मापि ३-४-३२

किं यज्ञादयो विद्याङ्गभूताः केवलाश्रमस्याप्यङ्गभूताः उत नेति संशयः। केवलाश्रमस्याप्यङ्गत्वे नित्यानित्यसंयोगरूपविरोधः प्रसज्यत इति नाङ्गभूताः केवलाश्रमस्येति पूर्वः पक्षः। राद्धान्तस्तु—यदैकेनैव विनियोगेनोभयाङ्गत्वमिष्यते; तदा नित्यानित्यसंयोगविरोधः। इह तु "यावज्जीवमग्निहोत्रं जुहुयात्"; "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इति विनियोगपृथक्त्वेन विरोधः परिह्रियते; यथाऽग्निहोत्रादीनामेव कर्मणाम्। जीवनाधिकारकामनाधिकारयोरिवाधिकारभेदस्यास्फुटत्वात्तत्स्फुटीकरणाय पुनरिह चिन्त्यते। सूत्रार्थस्तु—"यावज्जीवमग्निहोत्रं जुहुयात्" इत्यादिना केवलगृहस्थाश्रमिणो जीवननिमित्ततया विहितत्वादेव यज्ञादि केवलाश्रमकर्मापि ॥ ३२

## सहकारित्वेन च ३-४-३३

"तमेतं वेदानुवचनेन" इत्यादिना विद्यासाधनत्वेन विहितत्वाच्च विद्यासहकारित्वेन चानुष्ठेयं यज्ञादिकर्म। विनियोगपृथक्त्वेन विरोधः परिह्रियत इत्यभिप्रायः ॥ ३३ ॥

## सर्वथापि त एवोभयलिङ्गात् ३-४-३४

सर्वथापि—उभयत्र विनियोगेऽपि त एव यज्ञादयः। कुतः? उभयलिङ्गात्—उभयत्र प्रत्यभिज्ञानाख्यलिङ्गात् ॥ ३४ ॥

## अनभिभवं च दर्शयति ३-४-३५

"धर्मेण पापमपनुदति" इत्यादिभिश्च यज्ञादिधर्मान्निर्दिश्य तैर्विद्यायाः अनभिभवं—पापकर्मभिरुत्पत्तिप्रतिबन्धाभावं दर्शयति। अत उभयत्र विनियोगात् केवलाश्रमिणां मुमुक्षूणां चानुष्ठेया यज्ञादयः॥ ३५ ॥

इति विहितत्वाधिकरणम् ॥ ८ ॥

## (९) विधुराधिकरणम्

## अन्तरा चापि तु तद्दृष्टेः ३-४-३६

विधुरादीनामनाश्रमिणां ब्रह्मविद्यायामधिकारोऽस्ति, नेति संशयः। आश्रमधर्मेतिकर्तव्यताकत्वाद्विद्यायाः तदभावात्तेषामनधिकार इति पूर्वः पक्षः। राद्धान्तस्तु—उर्ध्वरेतस्स्विव रैक्वादिष्वनाश्रमिषु विद्यानिष्ठत्वदर्शनादाश्रमनियतैर्जपोपवासदानादिभिरेव तेषां विद्यानुग्रहो भवतीत्यस्त्येवाधिकारः। सूत्रार्थस्तु—तुशब्दात्पक्षो व्यावृत्तः। चशब्दोऽवधारणे। अन्तराऽपि—आश्रमान् अन्तरा वर्तमानानामनाश्रमिणामप्यधिकारोऽस्त्येव। कुतः? तद्दृष्टेः-रैक्वादिषु विद्यानिष्ठत्वदृष्टेः ॥ ३६ ॥

## अपि स्मर्यते ३-४-३७

अपि च अनाश्रमिणामपि जपादिभिरेव विद्यानुग्रहः स्मर्यते, "जप्येनापि च संसिध्येद् ब्राह्मणो नात्र संशयः" इत्यादिना ॥ ६७ ॥

## विशेषानुग्रहश्च ३-४-३८

अाश्रमानियतधर्मविशेषेण विद्यानुग्रहश्श्रूयते च "तपसा ब्रह्मचर्येण श्रद्धया चाऽऽत्मानमन्विच्छेत्" इति ॥ ३८

अतस्त्वितरज्ज्यायो लिङ्गाच्च ३-४-३९

अतः-आनाश्रमित्वात् इतरत्—आश्रमित्वं ज्यायः, धर्मभूयस्त्वात्; लिङ्गाच्च-स्मृतेरित्यर्थः। "अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः" इति हि स्मर्यते। तस्मादनाश्रमित्वेन विद्यानिष्ठत्वमापद्विषयमित्यभिप्रायः ॥ ३९ ॥

इति विधुराधिकरणम् ॥ ९ ॥

(१०) तद्भूताधिकरणम्

तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः ३-४-४०

नैष्ठिकवैखानसपरिव्राजकानां स्वाश्रमेभ्यः प्रच्युतानामपि विद्याधिकारोऽस्ति, नेति संशयः। विधुरादिवज्जपादिभिरनुग्रहसंभवादस्त्येवाधिकार इति पूर्वः पक्षः। राद्धान्तस्तु—नैष्ठिकादीनां स्वाश्रमभ्रष्टानां प्रायश्चित्ताभावस्मरणाच्छिष्टबहिष्कृतत्वाच्च तेषामनधिकार इति। सूत्रार्थस्तु—तद्भूतस्य तु नातद्भावः—नैष्ठिकादिभूतस्यातथाभावो न संभवति; कुतः? तद्रूपाभावेभ्यः शास्त्रैः नियमात्, तद्रूपाभावाः नैष्ठिकाद्याश्रमधर्मभावाः; तेभ्यो नियच्छन्ति हि शास्त्राणि। "ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्" इति नैष्ठिकस्य तत्रैव नियमः; "अरण्यमियात्ततो न पुनरेयात्" इति च वैखानसस्य, "संन्यस्याग्निं न पुनरावर्तयेत्" इति च परिव्राजकस्य। अत एव तेषामनाश्रमित्वेनावस्थानाभावाद्विद्याधिकारो न संभवति। जैमिनेरप्यविगीतोऽयम् ॥ ४० ॥

न चाधिकारिकमपि पतनानुमानात् तदयोगात् ३-४-४१

आधिकारिकम्—अधिकारलक्षणोक्तम् "अवकीर्णिपशुश्च तद्वत्" इत्येतत्प्रायश्चित्तं नैष्ठिकस्य न संभवति; कुतः? पतनानुमानान्नैष्ठिकस्य तदयोगात्। तस्य हि पतनं स्मर्यते प्रायश्चित्ताभाववचनेन, "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः। प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा" इति। अत उपकुर्वाणब्रह्मचारिविषयमाधिकारिकम् ॥ ४१ ॥

## उपपूर्वमपीत्येके भावमशनवत् तदुक्तम् ३-४-४२

एके प्रायश्चित्तभावमपि मन्यन्ते, यत उपपूर्वम् उपपातकमिदम्; अशनवत्—मध्वशनादिनिषेधतत्प्रायश्चित्तवद्भवतीत्यर्थः। अत उपकुर्वाणस्य ब्रह्मचारिणः उक्तमाधिकारिकमस्यापि भवतीति। तदुक्तं स्मृतिकारैः, "उत्तरेषां चैतदविरोधि" इति। उपकुर्वाणे ब्रह्मचारिण्युक्तो धर्मः उत्तरेषां चाश्रमिणां स्वाश्रमाविरोधी भवत्येवेत्यर्थः ॥४२॥

## बहिस्तूभयथापि स्मृतेराचाराच्च ३-४-४३

उभयथापि—उपपातकत्वे महापातकत्वेऽपि नैष्ठिकात्प्रच्युतः बहिर्भूतः कर्माधिकारात्; "प्रायश्चित्तं न पश्यामि" इति स्मृतेः। आचाराच्च। वर्जयन्ति ह्येनं शिष्टा विद्योपदेशादौ। यद्यपि कल्मषनिबर्हणाय कैश्चित् प्रायश्चित्तमुच्यते, तथापि कर्माधिकारापादिनी शुद्धिस्तेषां न संभवतीत्यभिप्रायः ॥ ४३ ॥

इति तद्भूताधिकरणम् ॥ १० ॥

### (११) स्वाम्यधिकरणम्

## स्वामिनः फलश्रुतेरित्यात्रेयः ३-४-४४

उद्गीथाद्युपासनं किं यजमानेनानुष्ठेयम्, उत ऋत्विजेति संशयः। "यदेव विद्यया करोति....तदेव वीर्यवत्तरम्" इति क्रतुवीर्यवत्तरत्वफलं यजमानस्येति दहरोपासनादिवत् यजमानेनानुष्ठेयमिति पूर्वः पक्षः। कर्माङ्गाश्रयत्वादस्योपासनस्य कर्मणश्चार्त्विज्यत्वेन एतदपि ऋत्विजाऽनुष्ठेयम्, गोदोहनादिवदिति राद्धान्तः।

सूत्रार्थस्तु—स्वामिनः यजमानस्योद्गीथाद्युपासने कर्तृत्वम्, कुतः? तस्यैव फलश्रुतेरित्यात्रेयो मन्यते ॥ ४४ ॥

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ३-४-४५

क्रत्वङ्गाश्रयत्वेन क्रत्वधिकृतस्यैवास्मिन्नुपासनेऽधिकारात् क्रतोश्चार्त्विज्यत्वेन एतदप्यार्त्विज्यमित्यौडुलोमिराचार्यो मन्यते, यजमानफलसाधनत्वेऽपि क्रतोस्तदनुष्ठानाय हि ऋत्विक् परिक्रियते ॥ श्री

इति स्वाम्यधिकरणम् ॥ ११ ॥

(१२) सहकार्यन्तरविध्यधिकरणम्

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ३-४-४६

"तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्। बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इत्यत्र मौनं विद्याङ्गतया विधीयते, उतानूद्यत इति संशयः। मौनस्य मननरूपत्वात् "श्रोतव्यो मन्तव्यः" इति च प्राप्तत्वेनानूद्यत इति पूर्वः पक्षः। राद्धान्तस्तु—मुनिशब्दस्य प्रकृष्टमननशीले प्रसिद्धेः प्रकृष्टमननमुपास्यविषयाभ्यासरूपं विद्यानिष्पत्तये विधीयत इति। सूत्रार्थस्तु—तद्वतः विद्यावतः। सहकार्यन्तरं—मौनं विधिः; विधीयत इति विधिरिति मौनं विधिरित्युक्तम्। विध्यादिवत्। अत्रापि विधीयत इतिविधिः यज्ञदानप्रभृत्याश्रमधर्मः आदिशब्दाच्छ्रवणमनने गृह्येते। आश्रम धर्मवत् श्रवणमननवच्च पाण्डित्यबाल्ययोस्तृतीयमिदं सहकार्यन्तरं मौनमपूर्वं विधीयते; कुत इत्यत आह पक्षेणेति। मुनिशब्दस्य प्रकृष्टमननयुक्ते पक्षेण—प्रसिद्धेरित्यर्थः ॥ ४६ ॥

कृत्स्नभावात्तु गृहिणोपसंहारः ३-४-४७

सर्वाश्रमिणां विद्यावत्त्वेऽपि छान्दोग्ये, "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते" इति गृहस्थधर्मेणोपसंहारः सर्वाश्रमधर्मप्रदर्शनार्थः। कुतः? कृत्स्नभावात्—कृत्स्नेषु भावात्—कृत्स्नेष्वाश्रमिषु विद्यायाः सद्भावादित्यर्थः ॥ ४७ ॥

## मौनवदितरेषामप्युपदेशात् ३-४-४८

"अथ मुनिः" इत्यस्मिन् वाक्ये "अथ भिक्षाचर्यं चरन्ति" इति पारिव्राज्यैकान्तधर्मेणोपसंहारोऽपि सर्वाश्रमधर्मप्रदर्शनार्थः, भिक्षाचर्य-मौनादिवदितरेषामाश्रमधर्माणां यज्ञादीनामप्युपदेशात् ॥

इति सहकार्यन्तरविध्यधिकरणम् ॥ १२ ॥

### (१३) अनाविष्काराधिकरणम्

## अनाविष्कुर्वन्नन्वयात् ३-४-४९

तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इत्यत्र किं बालस्य कर्म कामचारादिकं सर्वं विदुषोपादेयम्, उत विद्यामाहात्म्यानाविष्कार इति संशयः। "बाल्येन तिष्ठासेत्" इत्यविशेषविधानात् कामचारादिकं सर्वमप्युपादेयमिति पूर्वः पक्षः—विदुषो विशेषविधानात्, विद्यामाहात्म्याच्च, निषेधश्रुतयो बाधिता भवेयुरिति। राद्धान्तस्तु—पाण्डित्यप्रयुक्तस्वमाहात्म्यानाविष्कार एव विद्यान्वययोग्यतयोपादेयः; इतरस्य कामचारादेः, "नाविरतो दुश्चरितात्" इत्यादिशास्त्रैर्विद्योत्पत्तिविरोधित्वावगमात्। अतो यथा बालः स्वाभिजनादि अनाविष्कुर्वन् वर्तते, तथा विद्वान् वर्ततेत्येतदेव युक्तम्। सूत्रमपि व्याख्यातम् ॥ ४९ ॥

इति अनाविष्काराधिकरणम् ॥ १३ ॥

### (१४) ऐहिकाधिकरणम्

## ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ३-४-५०

मोक्षव्यतिरिक्ताभ्युदयफलमुपासनं किं स्वसाधनभूतपुण्यकर्मानन्तरमेवोत्पद्यते उतानन्तरमन्यदा वेत्यनियम इति संशयः। साधननिर्वृत्तौ विलम्बहेत्वभावादनन्तरमेवेति पूर्वः पक्षः। राद्धान्तस्तु—अप्रस्तुते प्रबलकर्मान्तरप्रतिबन्धे सत्यनन्तरम्, प्रस्तुते तदुत्तरकालमित्यनियमः। दृश्यते हि प्रबलकर्मान्तरेण फलप्रतिबन्धः; "यदेव विद्यया करोति तदेव

वीर्यवत्तरम्" इति उद्गीथोपासनस्य क्रतोः कर्मान्तरेण फलाप्रतिबन्धः फलमिति, "पृथग्ध्यप्रतिबन्धः फलम्" इत्यभ्युपगमात्। सूत्रमपि व्याख्यातम्। ऐहिकम्—अभ्युदयफलमित्यर्थः ॥ ५० ॥

इति ऐहिकाधिकरणम् ॥ १४ ॥

---

(१५) मुक्तिफलाधिकरणम्

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ३-४-५१

किं मुक्तिफलान्युपासनानि स्वसाधनभूतातिशयितपुण्यकर्मानन्तरमुत्पद्यन्ते, उत पूर्ववदनियम इति संशयः। मुक्तिफलोपासनसाधनभूतकर्मणां सर्वकर्मभ्यो बलवत्तरत्वेन प्रतिबन्धाभावादनन्तरमेवोत्पद्यत इति पूर्वः पक्षः। तत्रापि ब्रह्मविदपचारस्य ततोऽपि बलवत्तरत्वेन प्रतिबन्धसंभवादनियम एवेति राद्धान्तः। सूत्रार्थस्तु—मुक्तिफलानामप्येवमनियमः। कुतः? तदवस्थावधृतेः—प्रतिबन्धाभावे सति फलावधृतेः। द्विरुक्तिरध्यायपरिसमाप्तिं द्योतयति ॥ ५१॥

इति मुक्तिफलाधिकरणम् ॥ १५ ॥

---

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे तृतीयस्याध्यायस्य चतुर्थः पादः ॥ ३ ॥

---

समाप्तश्चाध्यायः ॥ ३ ॥

# अथ चतुर्थोऽध्यायः। प्रथमः पादः

(१) आवृत्त्यधिकरणम्

## आवृत्तिरसकृदुपदेशात् ४-१-१

"ब्रह्मविदाप्नोति परम्", "तमेवं विद्वानमृत इह भवति" इत्यादिवेदान्तविहितं वेदनं किं सकृत्कृतमेव शास्त्रार्थः, उतासकृदावृत्तमिति संशयः। सकृत्कृतमेवेति पूर्वः पक्षः, "स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति" इत्यादौ वेदनस्यैव मुक्त्युपायत्वप्रतिपादनात्, सकृत्कृ-

तेऽपि वेदने शास्त्रार्थनिर्वृत्तेः तस्यासकृदावृत्तौ प्रमाणाभावात्। राद्धान्तस्तु—"यस्तद्वेद यत्स वेद स मयैतदुक्तः" इत्युपक्रम्य, "अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" इत्येकस्मिन् वाक्ये विद्युपास्योर्व्यतिकरेण प्रयोगदर्शनात्, समानार्थेषु "ब्रह्मविदाप्नोति परम्" "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादिषु ध्यानविध्योर्व्यतिकरदर्शनाच्च, ध्यानोपासनादिशब्दवाच्यमसकृदावृत्तं स्मृतिसन्तानरूपवेदनमेव शास्त्रार्थ इति निश्चीयते। सूत्रार्थस्तु—आवृत्तिरसकृत् ब्रह्मप्राप्तिसाधनं वेदनमसकृदावृत्तमेव शास्त्रार्थः। वेदनं ध्यानशब्दवाच्यमित्यर्थः। कुतः? उपदेशात्—"ओमित्येवं ध्यायथात्मानम्", "निचाय्य तं मृत्युमुखात् प्रमुच्यते", आत्मानमेव लोकमुपासीत", "आत्मा वा अरे द्रष्टव्यः" इत्यादिना उपासनोपसंहारोपदेशात्। उपासनं चाविच्छिन्नस्मृतिसन्तानरूपमिति पूर्वमेवोक्तम्।

## लिङ्गाच्च ४-१-२

लिङ्गं स्मृतिः। स्मर्यते चायमर्थः "मां ध्यायन्त उपासते। तेषामहं समुद्धर्ता मृत्युसंसारसागरात्"। "ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते" "तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा। तद्ध्यानं प्रथमैष्षड्भिरङ्गैर्निष्पाद्यते तथा" इति॥ २॥

इति आवृत्त्यधिकरणम्॥ १॥

---

(२) आत्मत्वोपासनाधिकरणम्

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ४-१-३

किमुपास्यं ब्रह्मोपासितुरन्यत्वेनानुसन्धेयम्, उतात्मत्वेनेति संशयः। "अधिकं तु भेदनिर्देशात्", "अधिकोपदेशात्" इत्यादिषूपासितुरुपास्यस्यार्थान्तरत्वेनैवोपपादनात् यथावस्थितस्यैवोपास्यत्वाच्चान्यत्वेनोपास्यमिति पूर्वः पक्षः। राद्धान्तस्तु—"त्वं वा अहमस्मि भगवो देवते" इति पूर्वे उपासितारः उपास्यमात्मत्वेनोपगच्छन्ति। तानुपासितॄन् प्रति अर्थान्तरभूतस्यापि ब्रह्मणः उपासितुरात्मत्वं ग्राहयन्ति शास्त्राणि, "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इत्यारभ्योपासिता परमात्मनश्श-

रीरम्, परमात्मा चोपासितुरात्मेति प्रतिपादनेन; तथा "सर्वं खल्विदं ब्रह्म तज्जलान्" इति "सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः...ऐतदात्म्यमिदं सर्वम्" इति च तदायत्तस्वरूपस्थितिप्रवृत्तिताप्रतिपादनेन च। एवमुपासितुस्स्वात्मनोऽप्यात्मत्वाद्ब्रह्मणः यथावस्थितस्वात्मशरीरकब्रह्मानुसन्धाने अहमित्येवानुसन्धेयम्। यथा 'मनुष्योऽहमस्मि' इति स्वशरीरस्य स्वप्रकारतैकस्वभावतया प्रकारिणि स्वात्मनि पर्यवसानम्, तथा स्वात्मनोऽहंप्रत्ययोऽहंशब्दश्च न केवलस्वात्मविषयौ, परमात्मशरीरतया तद्विशेषणत्वेनैव स्वात्मनोऽवस्थानात्। सूत्रमपि व्याख्यातम्॥ ३॥

इति आत्मत्वोपासनाधिकरणम्॥ २॥

## (३) प्रतीकाधिकरणम्

### न प्रतीके न हि सः ४-१-४ ब्रह्मदृष्टिरुत्कर्षात् ४-१-५

"मनो ब्रह्मेत्युपासीत" इत्यादिषु प्रतीकोपासनेष्वप्यात्मत्वेनानुसन्धानं कर्तव्यम्, उत नेति संशयः। मनो ब्रह्मेत्युपासीत" इति ब्रह्मोपासनत्वाविशेषादात्मेत्येवानुसन्धानमिति पूर्वः पक्षः। राद्धान्तस्तु—न प्रतीके आत्मत्वानुसन्धानं कार्यम्; कुतः? न हि मनआदिरुपासितुरात्मा। न च तत्र ब्रह्मोपास्यम्। ब्रह्मदृष्ट्या मनआदिरुपास्यः; अपकृष्टे उत्कृष्टदृष्टिरभ्युदयाय भवति। यथा भृत्यादौ राजदृष्टिः। सूत्रद्वयं च व्याख्यातम्॥ ४॥ ५॥

इति प्रतीकाधिकरणम्॥ ३॥

## (४) आदित्यादिमत्यधिकरणम्

### आदित्यादिमतयश्चाङ्ग उपपत्तेः ४-१-६

"य एवासौ तपति तमुद्गीथमुपासीत" इत्यादिषु कर्माङ्गाश्रयोपासनेषु किमुद्गीथादावादित्यादिदृष्टिः कार्या, उतादित्यादावुद्गीथादिदृष्टिरिति संशयः। कर्मणः फलसाधनतयोत्कर्षात् आदित्यादेर्देवतात्वेन तद्गुणत्वाच्चादित्यादावुद्गीथादिदृष्टिः कार्येति पूर्वः पक्षः।

राद्धान्तस्तु—कर्मणोऽपि फलसाधनत्वमादित्यादिदेवताराधनद्वारेणेति आदित्यादेरेवोत्कर्षोपपत्तेः आदित्यादिमतय एव कर्माङ्गोद्गीथादौ कार्याः। सूत्रं च व्याख्यातम् ॥ ६ ॥

इति आदित्यादिमत्यधिकरणम् ॥ ४ ॥

---

(५) आसीनाधिकरणम्

आसीनस्संभवात् ४-१-७

किमिदं ब्रह्मोपासनमासीनः कुर्यात्; उतासीनः, शयानः, तिष्ठन्, गच्छन् वेत्यनियमः इति संशयः। विशेषाश्रवणादनियमः इति पूर्वः पक्षः। राद्धान्तस्तु—आसीनस्यैवैकाग्रतासंभवात्, एकाग्रतामूलत्वाच्चोपासनस्य, आसीनः कुर्यात्। सूत्रमपि व्याख्यातम् ॥ ७ ॥

ध्यानाच्च ४-१-८

"निदिध्यासितव्यः" इत्युपासनस्य ध्यानरूपत्वाच्चैकाग्रचित्तता अवश्यम्भाविनी। ध्यानं हि विजातीयप्रत्ययान्तराव्यवहितं तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपम् ॥ ८ ॥

अचलत्वं चापेक्ष्य ४-१-९

निश्चलत्वं चापेक्ष्य ध्यानवाचोयुक्तिः पृथिव्यादिषु दृश्यते, "ध्यायतीव पृथिवी, ध्यायतीवान्तरिक्षं ध्यायतीव द्यौः" इत्यादिका। अतो ध्यायतः पृथिव्यादिवदचलत्वमासीनस्यैव संभवति ॥ ९ ॥

स्मरन्ति च ४-१-१०

स्मरन्ति चासीनस्यैव ध्यानम्, "उपविश्याऽऽसने युञ्ज्यात् योगमात्मविशुद्धये" इति ॥ १० ॥

यत्रैकाग्रता तत्राविशेषात् ४-१-११

यस्मिन् देशे यस्मिंश्च काले मनस एकाग्रता, तत्र देशे काले चोपासनं कार्यम्; 'शर्करादिरहिते मनोनुकूले शुचौ देशे' इत्येतदतिरिक्तविशेषाग्रहणात्। यथा देशकालयोरेकाग्रतायामविशेषः, न तथा स्थितिगत्यादौ; आसीनस्य तु विशेषोऽस्तीत्यभिप्रायः ॥ ११ ॥

इति आसीनाधिकरणम् ॥ ५ ॥

(६) आप्रयाणाधिकरणम्

## आप्रयाणात् तत्रापि हि दृष्टम् ४-१-१२

तदिदमपवर्गसाधनमुपासनमेकस्मिन्नहनि कार्यम्, उत प्रत्यहमाप्रयाणादनुवर्तनीयमिति संशयः। एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वात् तावतैव परिसमापनीयम्। "यावदायुषम्" इति तु वचनं विधिशब्दस्याभावाद्विद्यायाः फलेनोपसंहारपरमिति पूर्वः पक्षः। राद्धान्तस्तु—आ प्रयाणात् अनुवर्तनीयम्; कुतः? तत्रापि हि दृष्टम्—"स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते" इति। अप्राप्तत्वेनानुवादत्वासंभवाद्विधिरेवायमिति ॥ १२ ॥

इति आप्रयाणाधिकरणम् ॥ ६ ॥

(७) तदधिगमाधिकरणम्

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ४-१-१३

विदुष उत्तरपूर्वाघयोरश्लेषविनाशौ किं संभवतः, उत नेति संशयः। "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति भोगादेव कर्मक्षयश्रवणादश्लेषविनाशश्रुतिः कथञ्चिद्विद्यास्तुत्यर्थतया नेयेति पूर्वः पक्षः। राद्धान्तस्तु—द्वयोश्शास्त्रयोर्भिन्नविषयत्वेन विरोधाभावात् संभवत एव। कर्मणां फलजननसामर्थ्यं द्रढयति "नाभुक्तं क्षीयते" इति। एवमेवंविदि पापं कर्म न श्लिष्यते", "एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति च श्रुतिर्विद्यायास्तत्सामर्थ्यनिवारणशक्तिविषयेऽति। यथा अग्नेजसोः शीतजननतन्निवारणशक्तिविषये प्रमाणे न विरुध्येते इति। सूत्रमपि व्याख्यातम् ॥ १३ ॥

इति तदधिगमाधिकरणम् ॥ ७ ॥

## (८) इतराधिकरणम्

### इतरस्याप्येवमसंश्लेषः पाते तु ४-१-१४

किमसंश्लेषविनाशौ पुण्यकर्मणोऽपि समानौ? उत नेति संशयः। पुण्यकर्मफलस्य सुखरूपत्वेन विदुषोऽनिष्टत्वाभावान्न समानाविति पूर्वः पक्षः। राद्धान्तस्तु — मुमुक्षोर्मोक्षविरोधित्वेनानिष्टत्वसाम्यादश्लेषविनाशौ समानावेव। सूत्रार्थस्तु—इतरस्य पुण्यस्याप्यनिष्टफलत्वसाम्यादेवम् अश्लेषविनाशौ। विद्यानुगुणस्य तु वृष्ट्यन्नारोग्यादिफलस्य शरीरपातादूर्ध्वमनिष्टत्वादश्लेषः ॥ १४ ॥

इति इतराधिकरणम् ॥ ८ ॥

## (९) आनारब्धकार्याधिकरणम्

### अनारब्धकार्य एव तु पूर्वे तदवधेः ४-१-१५

विद्योत्पत्तेः पूर्वकृतयोः पुण्यपापयोरविशेषेण विनाशः, उतानारब्धकार्ययोरेवेति संशयः। "सर्वे पाप्मानः प्रदूयन्ते" इति विशेषाभावादविशेषेणेति पूर्वः पक्षः। राद्धान्तस्तु—"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इत्युत्पन्नविद्यस्यापि शरीरमोक्षावधित्वश्रुतेः, सर्वविनाशे शरीरस्थित्यनुपपत्तेश्चानारब्धकार्ययोरेव विनाशः। सूत्रं च व्याख्यातम् ॥ १५ ॥

इति अनारब्धकार्याधिकरणम् ॥ ९ ॥

## (१०) अग्निहोत्राद्यधिकरणम्

### अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ४-१-१६

अग्निहोत्राद्याश्रमधर्मः किं विदुषोऽनुष्ठेयः, उत नेति संशयः। सुकृतदुष्कृतयोरश्लेषविनाशाभिधानादाश्रमधर्मस्यापि सुकृतत्वसाम्येन कार्याश्लेषादननुष्ठेय इति पूर्वः पक्षः। राद्धान्तस्तु—आश्रमधर्मस्य तु

विद्योत्पत्तिरेव कार्यमिति तत्कार्यायैवानुष्ठेयः। दृश्यते हि—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इत्यादिना विद्योत्पत्तिकार्यत्वम्। विद्या चाऽऽप्रयाणादहरहरभ्यासाधेयातिशयोत्पाद्यैव। सूत्रं च व्याख्यातम्।

यद्यग्निहोत्रादिसाधुकृत्या विद्योत्पत्त्यर्था; पूर्वकृता च साधुकृत्या अनुभूतफला प्रारब्धफला च; "सुहृदस्साधुकृत्याम्" इत्यस्य विषयः क इत्याशङ्क्याह—

अतोऽन्यापि ह्येकेषामुभयोः ४-१-१७

अतः—अग्निहोत्रादिसाधुकृत्यायाः अन्याऽपि—विद्याधिगमात् पूर्वोत्तरयोः पुण्यकर्मणोरुभयोश्च वृष्ट्यन्नाद्यर्थतया विदुषाऽनुष्ठिता, विद्योत्पत्तेः पूर्वं कृताऽनादिकालप्रवृत्ता च प्रबलकर्मान्तरप्रतिबद्धफला, साधुकृत्याऽस्ति हि। अत एकेषां शाखिनाम्, "सुहृदस्साधुकृत्याम्" इति वचनं तद्विषयम्; विद्ययाऽश्लेषविनाशश्रुतिश्च तद्विषया ॥ १७ ॥

अनुष्ठितस्य कर्मणः प्रबलकर्मप्रतिबन्धसंभवं पूर्वोक्तं स्मारयति—

यदेव विद्ययेति हि ४-१-१८

उक्तं ह्युद्गीथविद्यायाः क्रतोः कर्मान्तरप्रतिबन्धाभावः फलमिति; अतः प्रतिबद्धफलसाधुकृत्यस्यैव सुहृत्संक्रमणम् ॥ १८ ॥

इति अग्निहोत्राद्यधिकरणम् ॥ २० ॥

(११) इतरक्षपणाधिकरणम्

भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते ४-१-१९

इतरे—आरब्धकार्ये पुण्यपापे, किं विद्यायोनिशरीरावसान एव विनाश्येते, उत तच्छरीरावसाने शरीरान्तरावसाने वेत्यनियम इति संशयः। "यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति संपत्तेश्शरीरविमोक्षविलम्बमात्रश्रुतेः तच्छरीरावसान इति पूर्वः पक्षः। राद्धान्तस्तु—प्रारब्धफलयोः कर्मणोः भोगेनैव क्षपयितव्यत्वाभिप्रायेण "यावन्न

विमोक्ष्ये अथ सम्पत्स्ये" इत्युच्यते न शरीरमात्र (?) म्। कर्मविषयौ हि बन्धमोक्षौ। अतः प्रारब्धफले पुण्यपापे यावता शरीरेण समापनीये, तावता क्षपयित्वा अथ सम्पद्यते इत्यनियम एव। सूत्रं च व्याख्यातम् ॥ १९ ॥

इति इतरक्षपणाधिकरणम् ॥ ११ ॥

---

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे
चतुर्थस्याध्यायस्य प्रथमः पादः ॥ १ ॥

## चतुर्थाध्याये द्वितीयः पादः

### (१) वागधिकरणम्

### वाङ्मनसि दर्शनाच्छब्दाच्च ४-२-१

"अस्य सोम्य पुरुषस्य प्रयतो वाङ् मनसि सम्पद्यते मनः प्राणे", इत्यादिकाउत्क्रान्तिविषयाऽऽम्नायते तत्र किं वागिन्द्रियं मनसि संपद्यते, उत वाग्वृत्तिमात्रमिति संशयः। वाचो मनःप्रकृतित्वाभावात् स्वरूपलयस्तत्र न संभवतीति वाग्वृत्तिमात्राभिप्रायमिति पूर्वः पक्षः। राद्धान्तस्तु—अकारणे सम्पत्त्यभावस्य वाग्वृत्तावपि तुल्यत्वदर्शनात् "वाङ् मनसि" इति वाक्स्वरूपस्यैव सम्पत्तिः। शब्दाच्च स्वरूपमेव सम्पद्यते। "वाङ्मनसि सम्पद्यते" इति वाक्स्वरूपसम्पत्तावेव हि शब्दः; न वृत्तिमात्रसम्पत्तौ। अकारणे लयाभावात्सम्पत्तिशब्दस्संयोगाभिप्रायः। सूत्रं च व्याख्यातम् ॥ १ ॥

### अत एव सर्वाण्यनु ४-२-२

यतो वाचो मनसि संयोगमात्रमुच्यते, न तु लयः, अत एव तदानीं 'सर्वाणीन्द्रियाणि वाचमनु मनसि सम्पद्यन्ते' इति वचनं "वाङ्मनसि सम्पद्यते" इति वचनवदुपपन्नम्, "तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः" इति ॥ २ ॥

इति वागधिकरणम् ॥ १ ॥

## (२) मनोधिकरणम्

### तन्मनः प्राण उत्तरात् ४-२-३

"मनः प्राणे" इत्यत्र किं प्राणशब्देन आप उच्यन्ते, उत प्राण एवेति संशयः। प्राणस्य मनःप्रकृतित्वाभावात् "अन्नमयं हि सोम्य मनः" इति मनसोऽन्नमयत्वश्रवणात्, अपां चान्नप्रकृतित्वेन तत्संपत्तिरुपपद्यत इति प्राणशब्देनाप उच्यन्त इति पूर्वः पक्षः- "आपोमयः प्राणः" इति ह्यम्मयत्वात्प्राणस्य प्राणशब्देन आपो वक्तुं युज्यन्ते—इति। राद्धान्तस्तु—"अन्नमयं हि सोम्य मनः आपोमयः प्राणः" इति मनःप्राणयोर्न तत्तत्प्रकृतित्वमुच्यते, अपि तु तदाप्यायनम्, आहङ्कारिकत्वान्मनसः, प्राणस्य चाकाशप्रकृतित्वात्। अतः वाङ्मनसीतिवत् तदुत्तरात् "मनः प्राणे" इति शब्दात् तत्—सर्वेन्द्रियसंयुक्तं मनः प्राणे संयुज्यते ॥ ३ ॥

इति मनोधिकरणम् ॥ २ ॥

---

## (३) अध्यक्षाधिकरणम्

### सोऽध्यक्षे तदुपगमादिभ्यः ४-२-४

स प्राणः किं तेजसि संयुज्यते, उत जीवे इति संशयः। "प्राणस्तेजसि" इति वचनात् तेजस्येवेति पूर्वः पक्षः। राद्धान्तस्तु—उत्क्रान्तौ प्राणस्य जीवोपगमादिश्रुतेः प्राणः करणाध्यक्षे जीवे संयुज्यते। एतदविरोधाय जीवे संयुज्य पश्चात्तेजस्संयोगं "प्राणस्तेजसि" इति वदति। श्रूयन्ते हि प्राणस्य जीवोपगमादयः, "एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति", "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति", "कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि" इत्यादिषु ॥ ४ ॥

इति अध्यक्षाधिकरणम् ॥ ३ ॥

## (४) भूताधिकरणम्

### भूतेषु तच्छ्रुतेः ४-२-५ नैकस्मिन् दर्शयतो हि ४-२-६

"प्राणस्तेजसि" इति किं तेजोमात्रे प्राणस्संयुज्यते, उत भूतान्तरसंसृष्टे इति संशयः। "तेजसि" इति वचनात् तेजोमात्र इति पूर्वः

पक्षः। "पृथिवीमयः" इत्यादिना सञ्चरतो जीवस्य सर्वभूतमयत्वश्रुतेः, त्रिवृत्करणश्रुतिस्मृतिस्थाञ्च तेजस एकस्य कार्याक्षमत्वाद् भूतान्तरसंसृष्ट इति राद्धान्तः। सूत्रद्वयं व्याख्यातम् ॥ ५ ॥ ६ ॥

इति भूताधिकरणम् ॥ ४ ॥

## (५) आसृत्युपक्रमाधिकरणम्

### समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ४-२-७

इयमुत्क्रान्तिः किं विद्वदविदुषोस्समाना उताविदुष एवेति संशयः। विदुषोऽत्रैवामृतत्वप्राप्तिश्रुतेरविदुष एवेति पूर्वः पक्षः। श्रूयते हि विदुषोऽत्रैव ब्रह्मप्राप्तिः–"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति। राद्धान्तस्तु विदुषोऽर्चिरादिकयैव ब्रह्मप्राप्तिः। अर्चिरादिगत्युपक्रमात्प्रागियमुत्क्रान्तिः समाना। गतिश्च मूर्धन्यनाड्या, "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति" इति श्रुतेः। "यदा सर्वे प्रमुच्यन्ते" इत्यनेन गतिश्रुत्यविरोधायामृतत्वसाधनभूतोपासननिष्पत्तिरुच्यते—हृदि स्थिताः कामा यदा प्रमुच्यन्ते, तदैवोपासनारम्भान्मर्त्योऽमृतो भवतीति। अत्र–कामविमोकपूर्वकोपासने स्थितोऽर्चिरादिकया गत्या ब्रह्म समश्नुते इत्यर्थः। सूत्रार्थस्तु–सृतिः गतिः। आ गत्युपक्रमादुत्क्रान्तिर्विदुषोऽपि समाना, विदुषोऽर्चिरादिगतिश्रुतेः "अथ मर्त्योऽमृतो भवति" इत्युच्यमानममृतत्वमनुपोष्य च अदग्ध्वैव शरीरेन्द्रियादिसंबन्धम् उपासनारम्भपरिकररूपमित्यर्थः ॥ ७ ॥

### तदापीतेस्संसारव्यपदेशात् ४-२-८

तत्–अमृतत्वम्, उक्तप्रकारमेव। कुतः? आ अपीतेः संसारव्यपदेशात्—अपीतिः-ब्रह्मप्राप्तिः; अर्चिरादिकया गत्या देशविशेषं गत्वा यावद्ब्रह्म प्राप्यते, तावत् संसारः–शरीरसंबन्धो हि व्यपदिश्यते ॥ ८ ॥

गतिव्यपदेशादेव शरीरादुत्क्रान्तस्य कथं शरीरसंबन्ध इत्यत्राह—

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ४-२-९

सूक्ष्मशरीरमनुवर्तते गतिव्यपदेशात्। न केवलं गतिव्यपदेशादेव, प्रमाणान्तरतश्च तथा—सूक्ष्मशरीरवत्त्वस्योपलब्धेश्च। विदुषोऽर्चिरादिकया गत्या गच्छतश्चन्द्रमसा संवादोऽयमुपदिश्यते, तं प्रतिब्रयात् सत्यं ब्रयात् इत्यादिना ॥ ९ ॥

नोपमर्देनातः ४-२-१०

अतः—उक्तात् हेतुकलापात्, "अथ मर्त्योऽमृतो भवति" इति वचनं न देहसंबन्धोपमर्देनामृतत्वं वदति ; अपितूक्तमेवोपासनारम्भरूपं वदति ॥ १० ॥

अस्यैव चोपपत्तेरूष्मा ४-२-११

अस्य सूक्ष्मशरीरस्य विद्यमानत्वोपपत्तेश्च न देहसम्बन्धोपमर्दैन। उपलभ्यते ह्युत्क्रममाणस्य विदुषः कचिदूष्मा सूक्ष्मदेहगुणः। न चायं स्थूलदेहगुणः, अन्यत्रानुपलब्धेः। अतो विद्वान् सूक्ष्मशरीरेणोत्क्रामति ॥

प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम् ४-२-१२

"स एतास्तेजोमात्राः" इत्यारभ्य "इति तु कामयमानः" इत्यन्तेनाविदुषः उत्क्रान्तिप्रकारं लोकान्तरगमनं पुनरावृत्तिं चाभिधाय, "अथाकामयमानः" इत्यादिना "न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" इति विदुष उत्क्रान्तिप्रतिषेधादुक्तप्रकारो नोपपद्यत चेत्—तन्न-शारीरात् प्राणानामविश्लेषोऽनेनोच्यते। तस्य अकामयमानस्य विदुषः शारीरस्य प्राणाः स्वस्मान्नोत्क्रामन्ति; । देवयानेन गमनाय सहैव तिष्ठन्ति। अयमर्थः स्पष्टो ह्येकेषां पाठे "योऽकामो निष्काम आप्तकाम आत्मकामः न तस्मात् प्राणा उत्क्रामन्ति" इति ॥ १२ ॥

स्मर्यते च ४-२-१३

स्मर्यते च विदुषोऽपि मूर्धन्यनाड्योत्क्रान्तिः, "ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम्। ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्" इति ॥ १३ ॥

इति आसृत्युपक्रमाधिकरणम् ॥ ५ ॥

(६) परसम्पत्त्यधिकरणम्

## तानि परे तथा ह्याह ४-२-१४

"प्राणस्तेजसि" इति तेजश्शब्दनिर्दिष्टानि भूतानि जीवपरिष्वक्तानि किं परस्यां देवतायां सम्पद्यन्ते, उत यथाकर्म यथाविद्यं च गच्छन्तीति संशयः। तदानीं सुखदुःखोपभोगाद्यभावेन परसम्पत्तौ प्रयोजनाभावात् यथाकर्म यथाविद्यमिति पूर्वः पक्षः। सर्वस्य परदेवताकार्यत्वेन तदात्मकत्वाद् गन्तव्यस्थानमिदम्, "परस्यां देवतायाम्" इत्युच्यते। राद्धान्तस्तु—तानि परे परस्मिन् ब्रह्मणि सम्पद्यन्ते; "तेजः परस्यां देवतायाम्" इति ह्याह श्रुतिः। यथाश्रुति विश्रमस्थानत्वेन कार्यं परिकल्प्यमित्यर्थः। सूत्रं च व्याख्यातम् ॥ १४ ॥

इति परसम्पत्त्यधिकरणम् ॥ ६ ॥

(७) अविभागाधिकरणम्

## अविभागो वचनात् ४-२-१५

सेयं परमात्मनि सम्पत्तिः किं प्राकृतप्रलयवत् कारणापत्तिरूपा, उत मनःप्रभृतिसम्पत्तिवत् अविश्लेषमात्रमिति संशयः। परमात्मनः कारणत्वात्, तत्सम्पत्तिवचनाच्च कारणापत्तिरेवेति पूर्वः पक्षः। राद्धान्तस्तु—"वाङ्मनसि सम्पद्यते" इति श्रुतस्यैव सम्पत्तिवचनस्य सर्वत्रानुषङ्गाद्त्रानुषक्तस्य चाभिधानवैरूप्यासंभवादत्राप्यविभागः—अविश्लेष एवोच्यते। सूत्रमपि व्याख्यातम् ॥ १५ ॥

इति अविभागाधिकरणम् ॥ ७ ॥

---

(८) तदोकोधिकरणम्

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया ४-२-१६

"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति शताधिकया मूर्धन्यया नाड्या विदुषो गमनमिति नियमः संभवति, नेति संशयः।

नाडीनामतिसूक्ष्मत्वेन दुर्विवेचत्वान्नियमो न संभवतीति यादृच्छिकीं तया गतिमनुवदतीदं वचनमिति पूर्वः पक्षः। राद्धान्तस्तु—परमपुरुषाराधनभूतया विद्यया तदङ्गभूतगतिचिन्तनेन च प्रीतेन परमपुरुषेणानुगृहीतो जीवस्तत्प्रसादप्रकाशितद्वारः तयैव मूर्धन्यया नाड्या गच्छति—इति॥

सूत्रार्थस्तु — हार्दपरमपुरुषाराधनरूपविद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च प्रीतहार्दानुगृहीतो भवति जीवः; ततः तदोकः-जीवस्य स्थानं हृदयम्, अग्रज्वलनम्-प्रकाशिताग्रं भवति; एवं परमपुरुषप्रकाशितद्वारः शताधिकया गच्छति; "तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः", "सर्वस्य चाहं हृदि सन्निविष्टः" इति हार्दः परमात्मा॥ १६॥

इति तदोकोधिकरणम्॥ ८॥

## (९) रश्म्यनुसाराधिकरणम्

### रश्म्यनुसारी ४-२-१७

"अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति विद्वान् रश्म्यनुसारी गच्छतीति नियमस्संभवति, नेति संशयः। निशि मृतस्य विदुषः आदित्यरश्म्यनुसारासंभवादनियम इति पूर्वः पक्षः। वचनं तु पक्षप्राप्तमनुवदति। राद्धान्तस्तु—वचनस्य पक्षप्राप्त्यनुवादित्वे "अथैतैरेव" इत्यवधारणविरोधः। न च निशि रश्मयो न सन्तीति। निश्यपि निदाघसमये ऊष्मोपलब्धेः सूक्ष्मास्सन्त्येवेति रश्म्यनुसार्येव गच्छति। हेमन्तेऽनुपलब्धिः दुर्दिन इव हिमाभिभवात्॥

इति रश्म्यनुसाराधिकरणम्॥ ९॥

## (१०) निशाधिकरणम्

### निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च ४-२-१८

विदुषो निशि मृतस्य ब्रह्मप्राप्तिरस्ति, नेति संशयः। "दिवा च शुक्लपक्षश्च उत्तरायणमेव च। मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्" इति निशामरणस्य गर्हितत्वेन अधोगतिहेतुत्वान्न ब्रह्मप्राप्तिस्संभवतीति पूर्वः पक्षः। राद्धान्तस्तु—विद्यामाहात्म्यादुत्तरपूर्वाघयोरश्लेषविनाश-

श्रुतेरश्लिष्टविनष्टत्वात्, प्रारब्धस्यापि कर्मणः चरमदेहावधित्वाच्च, बन्धहेत्वभावान्निशि मृतस्यापि ब्रह्मप्राप्तिरस्त्येव—इति। अविद्वद्विषया निशामरणनिन्दा॥

सूत्रार्थस्तु—निशामरणनिन्दया निशि मृतस्य न ब्रह्मप्राप्तिरिति चेत्—तन्न—संबन्धस्य यावद्देहभावित्वात् अनारब्धकार्यकर्मसंबन्धस्य विद्यया विनष्टत्वात् प्रारब्धकार्यकर्मसंबन्धस्यापि यावच्चरमदेहभावित्वाद् बन्धहेत्वभावेन ब्रह्मप्राप्तिरस्त्येवेत्यर्थः। तदेतत् श्रुतिश्च दर्शयति "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति॥ १८॥

इति निशाधिकरणम् ॥ १०॥

## (११) दक्षिणायनाधिकरणम्

### अतश्चायनेऽपि दक्षिणे ४-२-१९

दक्षिणायने मृतस्य विदुषो ब्रह्मप्राप्तिरस्ति, नेति संशयः। "अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छति" इति विदुषो दक्षिणायने मृतस्य चन्द्रसायुज्यश्रवणात्, चन्द्रं प्राप्तानाम् "अथैतमेवाध्वानं पुनर्निवर्तन्ते" इति वचनाच्च, दक्षिणायनमृतस्य ब्रह्मप्राप्तिर्न संभवतीति पूर्वः पक्षः। राद्धान्तस्तु—पूर्वोक्ताद्बन्धहेत्वभावाद्विदुषश्चन्द्रं प्राप्तस्यापि पुनरावृत्तिर्न संभवति। चन्द्रसायुज्यवचनं विदुषो ब्रह्म प्रेप्सोर्विश्रमस्थानमात्रविषयम्; आवृत्तिवचनं त्वविदुषामेव। सूत्रार्थस्तु—यतो हेतोर्निशि मृतस्यापि ब्रह्मप्राप्तिः, तत एव बन्धहेत्वभावाद्दक्षिणायने मृतस्यापि ब्रह्मप्राप्तिरस्त्येव॥ १९॥

"यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः" इति मरणकालविशेषः स्मर्यत इति चेत्—तत्राह—

### योगिनः प्रति स्मर्यते स्मार्ते चैते ४-२-२०

योगिनः—ब्रह्मविद्यानिष्ठान् प्रति एते—देवयानपितृयाणगती, स्मार्ते स्मृतिविषयभूते अहरहस्स्मर्तव्ये स्मर्यते इत्यर्थः—"यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः" इत्यादिना "नैते सृती पार्थ जानन् योगी

मुह्यति कश्चन। तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन" इत्यन्तेन। न मुमूर्षून् प्रति कालविशेषोपादनं स्मर्यते। आतिवाहिकगणस्य कालाभिमानिदेवताविशेषभूयस्त्वेन "यत्र काले" इत्युच्यते ॥ २० ॥

इति दक्षिणायनाधिकरणम् (१०)

इनि श्रीभगवद्रामानुजविरचिते वेदान्तदीपे

चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

## चतुर्थाध्याये तृतीयः पादः

### (१) अर्चिराद्यधिकरणम्

### अर्चिरादिना तत्प्रथितेः ४-३-१

किं विद्वानर्चिरादिनैकेन मार्गेण गच्छति, उत तेन वाऽन्येन वेत्यनियम इति संशयः। तदर्थं परीक्ष्यते—किं सर्वासु श्रुतिष्वर्चिरादिरेक एव मार्ग आम्नायते, उत तत्रतत्रान्य इति। यदाऽर्चिरादिरेक एव सर्वत्रोक्तः तदा तेनैव गच्छति। यदा तत्रतत्राम्नाता अन्ये, तदाऽन्यैर्वाऽनेन वेत्यनियम इति। छान्दोग्यवाजसनेयकादिषु नानाविधाः गतिप्रकाराः श्रूयन्ते। छान्दोग्ये, "यथा पुष्करपलाश आपो न श्लिष्यन्ते" इत्युपक्रम्य, "सर्वाणि...नयति", "सर्वेषु लोकेषु भाति, य एवं वेद", "अथ यदु चैवास्मै शव्यं कुर्वन्ति यदु च न, अर्चिषमेव तेऽभिसंभवन्त्यर्चिषोऽहः, अह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षडुदङ्ङेति मासांस्तान् मासेभ्यस्संवत्सरं संवत्सरादादित्यमादित्याचन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति। बृहदारण्यके, "य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं वैद्युतात्पुरुषोऽमानवः स एत्य ब्रह्मलोकान् गमयति" इति। तत्रैवान्यथा "यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुलोकमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य

खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथाऽऽडम्बरस्य खम् तेन स ऊर्ध्वमाक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खम्" इत्यादिषु। तेषां ब्रह्मप्राप्तौ नैरपेक्ष्यश्रवणात्तैर्वाऽर्चिरादिना वेति विकल्प इति पूर्वः पक्षः। राद्धान्तस्तु—सर्वत्रार्चिराद्यन्तर्भूतादित्यादीनां दर्शनात्स एवेति प्रत्यभिज्ञानात्, अन्यत्रोक्तानामन्यत्रोपसंहाराच्च, सर्वत्रार्चिरादिरेक एव मार्ग इति तेनैव गच्छति विद्वान्। सूत्रार्थस्तु—अर्चिरादिनैव गच्छति विद्वान्। कुतः? तत्प्रथितेः। प्रथितिः—प्रसिद्धिः; सर्वत्र तत्प्रत्यभिज्ञानादित्यर्थः॥ १॥

इति अर्चिराद्यधिकरणम्॥ १॥

(२) वाय्वधिकरणम्

वायुमब्दादविशेषविशेषाभ्याम् ४-३-२

"तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्नः" इत्यारभ्य "मासेभ्यस्संवत्सरं संवत्सरादादित्यम्" इति च्छान्दोग्ये श्रुतम्। तत्र संवत्सरादित्ययोर्मध्ये देवलोको वायुश्च श्रुतौ श्रुत्यन्तरे। द्वयोः प्रकरणयोः किं देवलोको वायुश्चार्थान्तरभूतौ, उत वायुरेक एवेति संशयः। शब्दभेदादर्थान्तरभूताविति पूर्वः पक्षः। अर्थान्तरत्वे सति "देवलोकादादित्यम्" इति देवलोकस्य "तेन स ऊर्ध्वमाक्रमते स आदित्यम्" इति वायोश्चादित्यात्पूर्वत्वेन श्रौतक्रमनिर्दिष्टत्वात् देवलोकवायू यथेष्टक्रमेण निवेशयितव्यौ। राद्धान्तस्तु—वायुरेव देवलोकशब्देन निर्दिष्ट इति तस्मादनन्यः। देवानां लोक इति हि देवलोकः, देवानां वासस्थानमिति अविशेषेण निर्दिष्टम्। "योऽयं पवत एष देवानां गृहाः" इति वायोर्विशेषेण देवानां वासस्थानत्वेन श्रुतत्वादविशेषनिर्दिष्टो देवलोको वायुरेवेति निश्चीयत इति संवत्सरादूर्ध्वं वायुः वायोरादित्य इति क्रमश्च स्यात्॥ २॥

सूत्रार्थस्तु—अब्दात्—संवत्सरादूर्ध्वम् आदित्यात्पूर्वं वायुमेकमेव निवेशयेत्, देवलोकवायुशब्दाभ्याम् अविशेषविशेषाभ्यां वायोरेकस्यैव

निर्दिष्टत्वात्। देवानां वासस्थानमित्यविशेषेण हि देवलोकशब्दः वायुं देवानामावासस्थानभूतमभिदधाति, वायुशब्दस्तमेव विशेषेणेति द्वयोः प्रकरणद्वयविहितयोरेकत्वादित्यर्थः ॥ २ ॥

इति वाय्वधिकरणम् ॥ २ ॥

## (३) तटिदधिकरणम्

### तटितोऽधि वरुणः सम्बन्धात् ४-३-३

छान्दोग्यवाजसनेयककौषीतकीप्रभृतिष्वाम्नातस्यार्चिरादिमार्गस्यार्चिरहरापूर्यमाणपक्षोत्तरायणसंवत्सरवाय्वादित्यचन्द्रविद्युद्वरुणेन्द्रप्रजापतिरूपस्योपसंहारे वायुपर्यन्तस्य श्रुत्यादिभिः क्रमप्रकार उक्तः। वरुणेन्द्रप्रजापतीनां किं विद्युत उपरि निवेशः, उत वायोरुपरीति संशयः। "स वायुलोकं स वरुणलोकम्" इति कौषीतकीपाठक्रमेण वायोरुपरि वरुणस्य निवेशः। इन्द्रादेरपि वरुणनिवेशाय वाय्वादित्ययोः क्रमस्य बाधितत्वात्तत्रैव वरुणोपरीति पूर्वः पक्षः। राद्धान्तस्तु—विद्युतो मेघोदरवर्तित्वेन विद्युद्वरुणयोर्लोके वेदे च सम्बन्धावगमात् पाठक्रमादर्थक्रमस्य बलीयस्त्वेन वरुणस्य विद्युत उपरि निवेशः कार्यः। इन्द्रादेरपि वरुणनिवेशाय विद्युतो व्यवधानसहत्वदर्शनाद्वरुणोपरि निवेशः। सूत्रं च व्याख्यातम् ॥ ३ ॥

इति वरुणाधिकरणम् ॥ ३ ॥

## (४) आतिवाहिकाधिकरणम्

### आतिवाहिकास्तल्लिङ्गात् ४-३-४

किमर्चिरादयो विदुषो ब्रह्म प्रेप्सोर्मार्गचिह्नभूताः, उत गमयितार इति संशयः। 'अमुकं वृक्षममुकां नदीममुकं पर्वतपार्श्वं गत्वाऽमुकं ग्रामं गच्छ' इत्यादिदेशिकोपदेशप्रकारदर्शनान्मार्गचिह्नभूताः इति पूर्वः पक्षः। राद्धान्तस्तु "स एनान् ब्रह्म गमयति" इति वैद्युतपुरुषस्य गमयि-

तृत्वदर्शनात् इतरेषां चाविशेषनिर्दिष्टानां स एव संबन्ध इति निश्चीयते। "अग्निलोकम्" इत्यादिलोकशब्दोऽपि मध्ये भोगाभावाद्गमयितृत्व एवोपपद्यते। सूत्रार्थस्तु—आतिवाहिकाः—विदुषामतिवाहे परमपुरुषेण नियुक्ताः अर्चिराद्यभिमानिदेवताविशेषाः गमयितार इत्यर्थः, स एनान् ब्रह्म गमयति" इति लिङ्गात् ॥ ४ ॥

### वैद्युतेनैव ततस्तच्छ्रुतेः ४-३-५

ततः विद्युत उपरि वैद्युतेन विदुषो गमनम्, तच्छ्रुतेः—"स एनान् ब्रह्म गमयति" इति तस्यैव श्रुतेः। वरुणादीनां तदनुग्राहकत्वेन गमयितृत्वमिति निश्चीयत इत्यर्थः ॥ ५ ॥

इति आतिवाहिकाधिकरणम् ॥ ४ ॥

---

## (५) कार्याधिकरणम्

### कार्यं बादरिरस्य गत्युपपत्तेः ४-३-६

किमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनान् नयति उत परं ब्रह्मोपासीनान्, अथ प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्चेति संशयः। कार्यं हिरण्यगर्भमुपासीनानिति पूर्वः पक्षः, तेषामेव गत्युपपत्तेः। न हि परिपूर्णं सर्वगतं परं ब्रह्मोपासीनानां तत्प्राप्तये गतिरुपपद्यते, नित्यप्राप्तत्वात्। अविद्यानिवृत्तिरेव हि कार्या। परमेवोपासीनानित्यपरः पक्षः, "स एनान् ब्रह्म गमयति" इति ब्रह्मशब्दस्य तत्रैव मुख्यत्वात्। अविद्यानिवृत्तेः फलाभिसन्धिरहितयज्ञाद्यपेक्षावत् श्रवणाद्यपेक्षावच्च गतिश्रुत्या देशविशेषापेक्षा च विद्यत इति निश्चीयते। राद्धान्तस्तु—परमुपासीनान् अन्यानपि नयति, "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति" इति पञ्चाग्निविदां परं ब्रह्मोपासीनानां चार्चिरादिगतिश्रुतेः। पञ्चाग्निविदो हि प्रकृतिवियुक्तब्रह्मात्मकात्मस्वरूपविदः। ते च तत् प्राप्य पुनर्न निवर्तन्ते। परं ब्रह्मोपासीनास्तु यथावस्थितं परिपूर्णं परं ब्रह्मैव प्राप्य पुनर्न निवर्तन्ते। "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति" इत्युभयविधान् भेदेनोपादायार्चिरादिगतिश्रुतेरपुनरावृत्तिश्रुतेश्चैवमिति निश्चीयते ॥

सूत्रार्थस्तु—कार्यं–हिरण्यगर्भमुपासीनमातिवाहिको गणो नयतीति बादरिराचार्यो मन्यते, अस्यैव गत्युपपत्तेः; परमुपासीनस्य हि न तत्प्राप्तये गतिरुपपद्यते सर्वगतत्वात् परस्य ब्रह्मणः ॥ ६ ॥

## विशेषितत्वाच्च ४-३-७

"पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयति" इति "प्रजापतेस्सभां वेश्म प्रपद्ये" इति च प्राप्यस्थानस्य विशेषितत्वाच्च हिरण्यगर्भमुपासीनमेव नयति ॥ ७ ॥

## सामीप्यात्तु तद्व्यपदेशः ४-३-८

एवं निश्चिते "स एनान् ब्रह्म गमयति" इति हिरण्यगर्भस्य ब्रह्मशब्दव्यपदेशो ब्रह्मसामीप्यात्; "यो ब्रह्माणं विदधाति पूर्वम्" इति प्रथमजत्वेन ब्रह्मसामीप्यं हि विद्यते ॥ ८ ॥

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ४-३-९

हिरण्यगर्भप्राप्तावप्यपुनरावृत्तिरुपपद्यते, कार्यस्य—हिरण्यगर्भलोकस्यात्यये, तदध्यक्षेण—हिरण्यगर्भेणाधिकारिकपुरुषेण विदुषा सह परप्राप्त्यभिधानात् "ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" इति ॥ ९ ॥

## स्मृतेश्च ४-३-१०

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" इति स्मृतेश्चावगम्यते ॥ १० ॥

## परं जैमिनिर्मुख्यत्वात् ४-३-११

परं ब्रह्मोपासीनमेव नयत्यातिवाहिको गण इति जैमिनिराचार्यो मन्यते । "ब्रह्म गमयति" इति ब्रह्मशब्दश्च ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयपरिग्रहस्यैव न्याय्यत्वादुपपद्यते । एवं निश्चिते सति बहुवचनं च "अदितिः पाशान्" इतिवदुपपन्नम् ॥ ११ ॥

## दर्शनाच्च ४-३-१२

"अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यर्चिरादिना गतस्य परब्रह्मप्राप्तिं दर्शयति च ॥ १२ ॥

## न च कार्ये प्रत्यभिसन्धिः ४-३-१३

"प्रजापतेस्सभां वेश्म प्रपद्ये" इति प्रत्यभिसन्धिश्च न कार्ये; "धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" इत्यकृतं ब्रह्मलोकमिति तत्रैव विशेषितत्वात्, "यशोऽहं भवामि ब्राह्मणानाम्" इति सर्वात्मभावाभिसन्धानाच्च ॥ १३ ॥

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च ४-३-१४

कार्यमुपासीनानेवेति नायं नियमः; परमेवोपासीनानित्यपि नियमो न संभवति; कुतः? उभयथा च दोषात्—कार्यमुपासीनानेवेति नियमे "अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादिकाश्श्रुतयः "ये चेमेऽरण्ये श्रद्धा तपः" इति च प्रकुप्येयुः; परमेवेति नियमे "तद्य इत्थं विदुः" इति प्रकुप्येत् । तस्मादप्रतीकालंबनान्नयतीति भगवान् बादरायणो मन्यते । प्रतीकालंबनास्तु—अचिन्मिश्रम्, केवलम्, अचिद्वस्तु च 'सिंहो देवदत्तः' इतिवत् (सिंहदृष्ट्या देवदत्तवत्) ब्रह्मदृष्ट्या स्वरूपेण वा तद्वस्तु य उपासते, ते; अप्रतीकालंबनाः-तद्व्यतिरिक्ताः सर्वज्ञं सर्वकारणं सत्यसङ्कल्पं निखिलहेयप्रत्यनीकानवधिकातिशयानन्दस्वरूपं ब्रह्मोपासते ये, ये च प्रत्यगात्मानं भूतसूक्ष्मैस्सम्परिष्वक्तं सर्वत्र वर्तमानं भूतसूक्ष्मव्यतिरिक्तं ज्ञानैकस्वरूपं नित्यं निर्विकारं "य आत्मनि तिष्ठन्" इत्यादिनावगतब्रह्मात्मभावं पञ्चाग्निविद्योदितमुपासते, तानुभयविधान्नयति "तद्य इत्थं विदुर्ये चेमेऽरण्ये" इत्युभयविषयश्रुतेः । तत्क्रतुश्च "यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" इत्युभयेषामेवापुनरावृत्तिस्संभवति । अचिन्मिश्रं केवलमचिद्वस्तु चोपासीनानां तत्क्रतुन्यायादेव पुनरावृत्तिरवर्जनीया ॥ १४ ॥

## विशेषञ्च दर्शयति ४-३-१५

प्रतीकाद्युक्तलक्षणमचिन्मिश्रम्, केवलम्, अचिद्वस्तु चोपासीनानां सर्वेषां गत्यनपेक्षं परिमितफलविशेषं च दर्शयति श्रुतिः-"यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति" इत्यादिका । अतः, 'ब्रह्मणा सह ते सर्वे' इति वचनं नार्चिरादिना गतानां गतिप्रकारविषयम्; अर्चिरादिना गतानां

देहावसानसमय एव सुकृतदुष्कृतयोर्हानात् हिरण्यगर्भलोकावाप्ति-तद्वास-तत्रस्थभोगानुभवहेत्वभावात्, तत्क्रतुन्यायविरोधात् तदानीमेव ब्रह्म-प्राप्तिश्रुतिविरोधाच्च । "ब्रह्मणा सह ते सर्वे" इति वचनं तु पुण्यकर्म-विशेषेण हिरण्यगर्भलोकं प्राप्तानां "तदुपर्यपि बादरायणः" इतिन्यायेन तत्रैव निष्पन्नविद्यानां गतिप्रकारविषयम् । ते ब्रह्मलोके इति तु ब्रह्मलोक-शब्दस्य कर्मधारयवृत्त्या ब्रह्मविषयत्वात्, ब्रह्मण्युपास्ये वर्तमानाः परान्त-काले चरमदेहावसानसमये परामृतात्—परस्माद् ब्रह्मण उपासनप्रीता-द्धेतोः परिमुच्यन्ति सर्वे—सर्वस्माद्बन्धाद्विमुच्यन्त इति 'वेदान्तविज्ञान-सुनिश्चितार्थाः" इति प्रकरणादवगम्यते । "तद्य इत्थं विदुः "इति पञ्चाग्निविदां ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणात् तत्क्रतुन्यायेनाचिद्वियुक्तब्रह्मा-त्मकात्मस्वरूपोपासनं विवक्षितमिति निश्चीयते । तथैव तत्र श्रुतिरपि, "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति "इति रमणीयचरणाः" इति च कर्महेतुकमनुष्यादिभावोऽपामेव भूतान्तर-संसृष्टानामिति चिदचिद्विवेकं प्रतिपाद्य "तद्य इत्थ विदुः" इति भूतसूक्ष्मव्यतिरिक्तात्मस्वरूपोपासनमेव विदधाति ॥ १५ ॥

इति कार्याधिकरणम् ॥ ५ ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे
चतुर्थस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

## चतुर्थाध्याये चतुर्थः पादः

### (१) सम्पद्याविर्भावाधिकरणम्

### सम्पद्याविर्भावः स्वेनशब्दात् ४-४-१

"एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्येन रूपेणाभिनिष्पद्यते" इति किं परं ज्योतिरुपसम्पन्नस्य प्रत्यगात्मनः स्वरूपाविर्भावः प्रतिपाद्यते, उतान्येन साध्येन रूपेण संबन्ध इति संशयः । स्वस्वरूपस्य सुषुप्त्यादौ निरानन्दत्वदर्शनात्, स्वरूपमात्रस्य नित्याविर्भूतत्वाच्च साध्येन सुखैकान्तेन रूपेण संबध्यते । एवंच "अभि-

निष्पद्यते" इति वचनं सङ्गच्छते। परं ज्योतिरुपसम्पन्नस्य ह्यानन्दित्वं श्रूयते "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति", "स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य" इत्यादिषु। अतस्साध्येन रूपेणेति पूर्वः पक्षः। राद्धान्तस्तु—"स्वेन रूपेणाभिनिष्पद्यते" इति विशेषणात् स्वरूपाविर्भाव एव। स्वरूपस्य चापहतपाप्मत्वादिगुणकतया प्रजापतिवाक्योदितस्य कर्मकृतदेहसंबन्धतत्कृततिरोधानस्य परज्योतिरुपसम्पत्त्या सूक्ष्मदेहविनिर्मुक्तस्यासङ्कुचितज्ञानादिगुणकस्वरूपाविर्भावात् स्वयाथात्म्यानुभवपूर्वकानवधिकातिशयानन्दब्रह्मानुभवः सम्पत्स्यत इति "अभिनिष्पद्यते" इति चोपपन्नतरम्। सूत्रार्थस्तु—परं ज्योतिरुपसम्पद्य स्वस्वरूपाविर्भावः प्रतिपाद्यते। कुतः? स्वेनशब्दात्—साध्यस्यापि रूपस्य स्वासाधारणत्वेन स्वेनेति विशेषणं ह्यनर्थकम्॥ १॥

स्वस्वरूपमात्रस्य "अहं जानामि" इति नित्याविर्भूतत्वेन "परं ज्योतिरुपसम्पद्य" इत्यनर्थकमित्याशङ्क्याह—

## मुक्तः प्रतिज्ञानात् ४-४-२

कर्मसंबन्धतत्कृतदेहादेर्मुक्तस्वरूपमत्र "स्वेन रूपेणाभिनिष्पद्यते" इत्युच्यते। कथमिदमवगम्यते? "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इति कर्महेतुकदेहसंबन्धतत्कृतजागरिताद्यवस्थाविनिर्मुक्तस्वरूपस्यात्र वक्तव्यतया प्रतिज्ञानात्॥ २॥

एवमपि स्वरूपमात्राविर्भावस्य पुरुषार्थत्वं न सिद्ध्यतीत्याशङ्क्याह—

## आत्मा प्रकरणात् ४-४-३

देहादिविनिर्मुक्तः स्वरूपेणावस्थित आत्मा अपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणकः; तस्य ह्याविर्भाव उच्यते; कुतः? प्रकरणात्; "य आत्मा अपहतपाप्मा" इति प्रकृत्य हि "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इत्यादिनोच्यते। अतोऽपहतपाप्मत्वादिगुणकस्वरूपस्य कर्माख्याविद्यातिरोहितस्य परं ज्योतिरुपसम्पद्य निवृत्ततिरोधानस्याऽऽविर्भावः प्रतिपाद्यते॥ ३॥

इति सम्पद्याविर्भावाधिकरणम्॥ १॥

## (२) अविभागेनदृष्टत्वाधिकरणम्

## अविभागेन दृष्टत्वात् ४-४-४

किमयं मुक्त आविर्भूतस्वरूपः प्रत्यगात्मा परं ब्रह्म स्वात्मनो विभक्तमनुभवति, उत स्वात्मनोऽप्यात्मतयाऽविभागेन "अहं ब्रह्मास्मि" इतीति संशयः। "निरञ्जनः परमं साम्यमुपैति", "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति", "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः" इति श्रुतिस्मृतिभ्यः विभक्तमनुभवतीति पूर्वः पक्षः। राद्धान्तस्तु—'सर्वं खल्विदं ब्रह्म", "ऐतदात्म्यमिदं सर्वम्...तत्त्वमसि" इत्यादिना सामानाधिकरण्येन "यः पृथिव्यां तिष्ठन्...यस्य पृथिवी शरीरं", "य आत्मनि तिष्ठन्....यस्याऽत्मा शरीरम्" इत्यादिषु सर्वस्य चिदचिद्वस्तुनो ब्रह्मशरीरतया ब्रह्मप्रकारत्वात् तत्तद्वस्तुबुद्धिशब्दाः तत्पर्यन्तविषया इत्यवगम्य "आत्मेति तूपगच्छन्ति" इतिन्यायेन स्वात्मनोऽप्यात्मतया "अहं ब्रह्मास्मि" इत्युपासनेन यथावस्थितपरमात्मात्मकस्वात्मनो दृष्टत्वात् मुक्तः स्वात्मनोऽप्यात्मभूतं ब्रह्म 'अहं ब्रह्मास्मि' इत्यविभागेनैवानुभवति ॥

सूत्रार्थस्तु—'अहं ब्रह्मास्मि' इत्यविभागेनैव ब्रह्मानुभवति मुक्तः, स्वात्मनोऽप्यात्मतयोपासनेन यथावस्थितपरमात्मात्मकस्वरूपस्य दृष्टत्वात्। साधर्म्यश्रुतिस्तु परमात्मशरीरभूतस्य प्रत्यगात्मनोऽपहतपाप्मत्वादिगुणैस्तत्साधर्म्यं प्रतिपादयति। "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति ब्रह्मशरीरतया ब्रह्मप्रकारभूतत्वात् स्वात्मभूतेन ब्रह्मणा सह तद्गुणाननुभवतीति वदति। काम्यन्ते इति कामाः—कल्याणगुणाः। कल्याणगुणविशिष्टं ब्रह्मानुभवतीत्यर्थः ॥ ४ ॥

इति अविभागेनदृष्टत्वाधिकरणम् ॥ २ ॥

## (३) ब्राह्माधिकरणम्

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ४-४-५

किं जीवस्य स्वाभाविकं रूपमपहतपाप्मत्वादिगुणकम्, उत चैतन्यमात्रम्, उतोभयमिति संशयः। अपहतपाप्मत्वादिगुणकमिति प्रथमः पक्षः "य आत्माऽपहतपाप्मा" इति प्रतिपादनात्। चैतन्यमात्रमिति

द्वितीयः पक्षः, "एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव", विज्ञानघन एव" इत्यवधारणात्। राद्धान्तस्तु—ज्ञानस्वरूपस्यैवा-पहतपाप्मत्वादिगुणकत्वप्रतिपादनादविरोधाच्चोभयं स्वरूपम्। न च "विज्ञानघन एव" इत्यवधारणं गुणान्तरासहम्, यथा सैन्धवघनस्य "रसघन एव" इत्यवधारणेऽपि रसाश्रयद्रव्यं रूपस्पर्शादिगुणान्तरं च सहते; "रसघन एव" इत्यवधारणं तु रसवद्द्रव्यान्तरस्वभावव्यावृत्ति-परम्। द्रव्यान्तराणां हि स्वैकदेशे रसवत्त्वम्, सैन्धवघनस्य तु सर्वत्र, —एवमत्रापि जडवस्तुव्यावृत्तस्वस्वभावस्य सगुणस्याऽऽत्मनः स्वप्रकाश-तावधारणं "विज्ञानघन एव" इति क्रियते॥

सूत्रार्थस्तु—ब्राह्मेण अपहतपाप्मत्वादिना स्वरूपाविर्भावः। अप-हतपाप्मत्वादयो दहरवाक्ये ब्रह्मगुणाश्श्रुताः। उपन्यासादिभ्यः—तेषां ब्रह्मगुणानां प्रत्यगात्मन्यपि "य आत्माऽपहतपाप्मा" इत्यादिनोपन्या-सात्। आदिशब्दात् "जक्षत्क्रीडन् रममाणः" इत्यादिभ्योऽपि सत्य-सङ्कल्पत्वादयोऽवगम्यन्त इति जैमिनिराचार्यो मन्यते॥ ५॥

## चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ४-४-६

चैतन्यमात्रेण स्वरूपाविर्भावः "विज्ञानघन एव" इति तदात्म-कत्वावधारणादित्यौडुलोमिराचार्यो मन्यते॥ ६॥

## एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ४-४-७

एवं—विज्ञानस्वरूपस्यैव, स्वप्रकाशस्वरूपस्यैव पूर्वेषाम्—अपहत-पाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तानामपि "य आत्माऽपहतपाप्मा" इत्यु-पन्यासात्सद्भावावगमादुभयोः स्वरूपयोरविरोधं भगवान् बादरायणो मन्यते। उभयश्रुत्यवगतस्येतरेतरविरोधाभावान्नान्यतरबाधे प्रमाण-मस्तीत्यभिप्रायः॥ ७॥

इति ब्राह्माधिकरणम्॥ ३॥

## (४) संकल्पाधिकरणम्

### संकल्पादेव तच्छ्रुतेः ४-४-८

"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते। स उत्तमः पुरुषः। स तत्र पर्येति जक्षत्क्रीडन् रममाणस्स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा" इत्यादिराम्नायते। किमेते ज्ञात्यादयो मुक्तस्य सङ्कल्पादेव भवन्ति, उत प्रयत्नान्तरसव्यपेक्षात्सङ्कल्पादिति संशयः। लोके राजादीनां सत्यसङ्कल्पत्वेन व्यवह्रियमाणानामपि कार्ये प्रयत्नान्तरसापेक्षत्वदर्शनात् मुक्तस्यापि तथैव सापेक्षादिति पूर्वः पक्षः। "सङ्कल्पादेव" इत्यवधारण "विज्ञानघन एव" इतिवद्भविष्यति। राद्धान्तस्तु "सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति" इत्यवधारणान्नान्यापेक्षत्वम्। न चेह सत्यकामत्वाद्युपन्यासवत् मुक्तस्यान्यापेक्षत्वे प्रमाणमस्ति। लोके सत्यसङ्कल्पत्वाभावादेव प्रयत्नान्तरापेक्षत्वम्। न हि परमपुरुषव्यतिरिक्तः कश्चित्सत्यसङ्कल्पोऽस्ति। मुक्तश्च तत्प्रसादात् तत्साम्यमुपगतस्तथैव। सूत्रमपि व्याख्यातम् ॥ ८ ॥

### अत एव चानन्याधिपतिः ४-४-९

अतः—श्रुतेरेव मुक्तोऽनन्याधिपतिश्च। अन्याधिपतित्वं कर्माधीनत्वम्। "अपहतपाप्मा सत्यसङ्कल्पः" इति श्रूयते; अतोऽनन्याधिपतिः ॥

इति सङ्कल्पाधिकरणम् ॥ ४ ॥

---

## (५) अभावाधिकरणम्

### अभावं बादरिराह ह्येवम् ४-४-१०

किं मुक्तस्य शरीरेन्द्रियाद्यस्ति? उत न? अथ यथासङ्कल्पमस्ति च नेति च संशयः। "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति मुक्तस्याशरीरत्वश्रवणान्नास्त्येवेत्येकः पक्षः। "स एकधा भवति त्रिधा भवति" इति सशरीरत्वश्रुतेः अशरीरत्वश्रुतिः कर्मगृहीतशरीरविषयेति शरीरेन्द्रियाद्यस्त्येवेति द्वितीयः पक्षः। राद्धान्तस्तु—"मनसैतान्कामान्पश्यन् रमते य एते

ब्रह्मलोके" इत्यशरीरस्यैव भोगश्रुतेः. "स एकधा भवति" इतिश्रुतेश्च यथासङ्कल्पमस्ति च न चेति। सूत्रार्थस्तु—शरीराभावं बादरिर्मेने; एवमाह हि श्रुतिः "अशरीरं वाव सन्तम्" इति ॥ १० ॥

भावं जैमिनिर्विकल्पामननात् ४-४-११

शरीरादिभावं जैमिनिर्मेने। कुतः? विकल्पामननात्—विविधः कल्पः-विकल्पः; "स एकधा भवति त्रिधा भवति" इत्यादिना मुक्तस्य हि विविधकल्पनमाम्नायते; आत्मन एकरूपस्याच्छेद्यस्य वैविध्यासम्भवाच्छरीरद्वारेणैव हि विज्ञायते वैविध्यम् ॥ ११ ॥

द्वादशाहवदुभयविधं बादरायणोऽतः ४-४-१२

अतः ऊभयश्रुतेरिच्छातः, उभयविधम् शरीरवत्त्वमशरीरत्वं च भगवान् बादरायणो मेने। द्वादशाहवत्—यथा द्वादशाह उभयश्रुतेस्सत्रमहीनं च; "द्वादशाहमृद्धिकामा उपेयुः" इति सत्रं भवति "द्वादशाहेन प्रजाकामं याजयेत्" इत्यहीनम् ॥ १२ ॥

तन्वभावे सन्ध्यवदुपपत्तेः ४-४-१३

स्वेनेव सृष्टतनुप्रभृत्युपकरणाभावे परमपुरुषसृष्टैरुपकरणैर्भोगोपपत्तेस्सत्यसङ्कल्पोऽपि स्वयं न सृजति। सन्ध्यवत्–यथा स्वप्ने "अथ रथान्" इत्यारभ्य "स हि कर्ता" इति "य एष सुप्तेषु" इत्यारभ्य "तदु नात्येति कश्चन" इति चेश्वरसृष्टैरुपकरणैर्जीवो भुङ्क्ते—तथा मुक्तोऽपि लीलाप्रवृत्तेश्वरसृष्टैः पितृलोकादिभिर्लीलारसं भुङ्क्ते ॥ १३ ॥

भावे जाग्रद्वत् ४-४-१४

स्वसङ्कल्पसृष्टतनुप्रभृत्युपकरणसद्भावे जाग्रत्पुरुषभोगवत् मुक्तो लीलारसं भुङ्क्ते, परमपुरुषोऽपि दशरथवसुदेवादिपितृलोकादिकमात्मनः सृष्ट्वा तैर्मनुष्यधर्मलीलारसं भुङ्क्ते; तथा मुक्तश्च सत्यसङ्कल्पत्वात् परमपुरुषलीलान्तर्गतस्वपितृलोकादिकं स्वयमेव सृष्ट्वा तैर्लीलारसमनुभवति ॥ १४ ॥

नन्वात्माऽणुपरिमाण इत्युक्तम्; कथमनेकशरीरेष्वेकस्याणोरात्माभिमानसम्भव त्यत्राह—

प्रदीपवदावेशस्तथा हि दर्शयति ४-४-१५

यथा प्रदीपस्यैकस्यैकदेशवर्तिनः स्वया प्रभयाऽनेकदेशप्रवेशः; तद्वदात्मनोऽप्येकदेहस्थस्य स्वप्रभारूपेण ज्ञानेन सर्वदेहेषु यथासङ्कल्पमात्माभिमानानुगुणा व्याप्तिः संभवति-यथैकस्मिन् देहे हृदयादिदेशे वर्तमानस्याणोरपि सर्वस्मिन् देहे 'अहम्' इत्यभिमानानुगुणव्याप्तिः स्वप्रभारूपचैतन्येन, तद्वत्। तथा दर्शयति हि श्रुतिः, "वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" इति। प्रत्यगात्मनोऽणुत्वमेव स्वरूपमिति सूत्रकारमतम्; "नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्" इति परस्यैव महत्त्ववचनात्॥ १५॥

ननु परं ब्रह्म प्राप्तस्यान्तरबाह्यज्ञानलोपं दर्शयति श्रुतिः, "प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति; तत् कथं मुक्तस्य ज्ञानानन्त्यमुच्यत इत्यत्राह—

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ४-४-१६

नेदं मुक्तविषयम्; सुषुप्तिमरणयोरन्यतरापेक्षम्। आविष्कृतं हि श्रुत्या सुषुप्तिमरणयोर्निस्संबोधत्वम्, मोक्षदशायां सर्वज्ञत्वं च। सुषुप्तौ तावत्, "नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति, नो एवेमानि भूतानि विनाशमेवापीतो भवति" इति। विनाशम्-अदर्शनमित्यर्थः। मरणे च, "एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यति" इति। विनश्यति—न पश्यतीत्यर्थः। मोक्षे तु "स वा एष दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके" इति, सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति च॥ १६॥

इति अभावाधिकरणम्॥ ५॥

(६) जगद्व्यापारवर्जाधिकरणम्

जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ४-४-१७

किं मुक्तस्य भोगः निखिलहेयप्रत्यनीककल्याणैकतानसकलेतरविलक्षणानवधिकातिशयानन्दमहाविभूतिरूपपरब्रह्मानुभव एव, उत जगत्सृष्ट्यादिजगन्नियमनरूपलीलाऽपीति संशयः। "निरञ्जनः परमं साम्यमुपैति" इत्यादिश्रुतेर्जगन्नियमनरूपलीलाऽपीति पूर्वः पक्षः। राद्धा-

न्तस्तु—"यतो वा इमानि भूतानि जायन्ते", "सदेव सोम्येमग्र आसीत्", "ब्रह्म वा इदमेक एवाग्र आसीत्", "आत्मा वा इदमेक एवाग्र आसीत्", "एको ह वै नारायण आसीत्" इत्यादिषु परं ब्रह्म प्रकृत्यैव जगद्व्यापारः श्रूयते। तत्रतत्र प्रकरणे न मुक्तस्य सन्निधिरप्यस्ति। अतो जगन्नियमनरूपधुरावर्जं "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता", "स एको ब्रह्मण आनन्दः, श्रोत्रियस्य चाकामहतस्य" इत्यनवधिकातिशयानन्दब्रह्मानुभवे मुक्तस्य साम्यम्। ब्रह्म हि स्वस्य परस्य चानुभूयमानमविशेषेणानवधिकातिशयानन्दं भवति, आनन्दस्वरूपत्वाविशेषात्। सूत्रमपि व्याख्यातम् ॥ १७ ॥

प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ४-४-१८

प्रत्यक्षं-श्रुतिः "तस्य सर्वेषु लोकेषु कामचारो भवति", "इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्" इत्यादिश्रुत्या मुक्तस्य जगद्व्यापारोपदेशात् सोऽपीति चेत्—तन्न, आधिकारिकमण्डलस्थोक्तेः, आधिकारिकाः परमपुरुषेण लोकनियमनाधिकारे नियुक्ताः हिरण्यगर्भादयः; मण्डलानि तेषां लोकाः; तत्स्थभोगेषु मुक्तस्य यदीच्छा वर्तते, तत्रतत्र यथाकामं परमपुरुषानुग्रहेण वर्तमानः तत्रस्थान् भोगान् भुङ्क्ते इति तथा श्रुत्योक्तेः। 'कामान्नी', 'कामचारो भवति' इति हि श्रूयते; न नियुङ्क्त इति ॥ १८ ॥

उत्पत्त्यादिविकारवर्ती हेयमिश्रोऽत्यल्पश्च कथं मुक्तस्य भोगो भवति, यदिच्छातस्सर्वेषु लोकेषु कामचार इत्यत्राह—

विकारावर्ति च तथा हि स्थितिमाह ४-४-१९

चशब्दोऽवधारणे। उत्पत्त्यादिविकारेषु न वर्तत इति विकारावर्ति परं ब्रह्मैव। निर्धूतनिखिलविकारं निखिलहेयप्रत्यनीककल्याणैकतानं निरतिशयानन्दं परब्रह्म सविभूति सकलकल्याणगुणं मुक्तस्य भोग्यम्; तद्विभूत्यन्तर्गतत्वेन विकारवर्तिनां लोकानामपि मुक्तभोग्यत्वम्; तथा हि परस्मिन् ब्रह्मणि मुक्तस्यानुभवितृत्वेन स्थितिमाह श्रुतिः—"यदा ह्येवैष

एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति", "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति"। ब्रह्मनिष्ठो ब्रह्मैव लब्ध्वाऽनन्दी भवतीत्यर्थः। ब्रह्म हि निरतिशयकल्याणानन्तगुणकमनन्तमहाविभूति च। तत्र सविभूतिकब्रह्मानुभवाय विभूत्येकदेशभूतलोकेषु सञ्चरतस्तत्रतत्र कामचारो भवतीत्युच्यते ॥ १९ ॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ४-४-२०

उत्पत्त्यादिजगन्नियमनं परस्यैव। मुक्तस्य तु परब्रह्मानुभव एव भोग इत्युक्तमेवार्थं प्रत्यक्षानुमाने श्रुतिस्मृती दर्शयतः "तस्माद्वा एतस्मादात्मन आकाशस्संभूतः", "भीषाऽस्माद्वातः पवते", "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिका श्रुतिः; स्मृतिरपि "अहं सर्वस्य प्रभवः", "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा", "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" "मत्तस्सर्वं प्रवर्तते", "सोऽभिध्याय शरीरात् स्वात्सिसृक्षुर्विविधाः प्रजाः", "प्रशासितारं सर्वेषाम्" इत्यादिका परविषया। "अथाकाममयमानः—योऽकामो निष्काम आप्तकाम आत्मकामः" इत्यादिका श्रुतिः, स्मृतिरपि, "प्रियो हि ज्ञानिनोऽत्यर्थमहम्...। आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम्। वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः" "मां च योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च। शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च" इत्यादिका मुक्तविषया ॥ २० ॥

## भोगमात्रसाम्यलिङ्गाच्च ४-४-२१

"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति मुक्तस्य ब्रह्मानुभवभोगमात्रब्रह्मसाम्यवचनाल्लिङ्गाच्च जगद्व्यापारवर्जमिति निश्चीयते ॥ २१ ॥

यदि नियन्तृत्वं परस्यैव, एवं तर्हि स्वतन्त्रत्वेन मुक्तं परः कदाचित् पुनरावर्तयिष्यतीत्याशङ्क्याह—

